TRIVANDRUM SANSKRIT SERIES

No XLV

# THE

# PRAPANCHAHRIDAYA

EDITED BY

T GANAPATI SÂSTRÎ

*Curator of the Department for the publication*

*of Sanskrit manuscripts Trivandrum*

---

ED UNDER THE AUTHORITY OF THE GOVERNMENT OF

HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

---

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1915

# PREFACE.

This work is called Prapanchahridaya, and it briefly describes, in eight chapters, the world of forms ( अर्थप्रपञ्च ) and the world of names ( शब्दप्रपञ्च ). In all the manuscripts consulted for the edition, the sixth chapter is called षड्वर्गप्रकरण, while it describes the eight well-known schools of thought, *viz.*, Lokâyata, Arhata, Buddha, Akshapâda, Kaṇâda, Kapila, Jaimini, and Bâdarâyana. While, therefore, that chapter should be called अष्टवर्गप्रकरण, the title षड्वर्गप्रकरण, I think, has been given probably because the two schools of Akshapâda and Kanâda are considered as one, and Lokâyata does not deserve the name of a school, as it is condemned by all the other schools.

It is hoped that this book will be found useful by those desirous of acquiring a general knowledge of the various departments of knowledge found in Sanskrit. It is a pity that the name of the author is not found in any of the manuscripts.

The following five manuscripts in Malyalam character are used for preparing this edition. Of these, the first is a paper manuscript and the others are palm-leaf ones, more than a century old.

1. क Belonging to Parameswaran Moottatu, Suchindram, running up to the end of Upaveda Prakarana.
2. ख Lent by Mr. Idappalli Raja.
3. ग Lent by Mr. Rudran Numburi, Vaikam.
4. घ Belonging to Mr. Idappalli Raja, beginning with the Upânga Prakarana.
5. ङ Lent by Mr. Sridharan Moottatu, Ettumanur, running up to the end of Upaveda Prakarana.

Trivandrum,
13-8-1915.

T. GANAPATI SASTRI.

# निवेदना ।

अस्मिन् प्रपञ्चहृदयेऽर्थात्मकः शब्दात्मकश्च प्रपञ्चोऽष्टभिः प्रकरणैः संक्षेपतो निरूपितः । तत्र प्रथमे तनुभुवनप्रकरणे भुवननिरूपणे पुराणसरणिराश्रिता, न ज्योतिःशास्त्रसरणिः । षष्ठं प्रकरणं षड्वर्गप्रकरणमिति मातृकासु सर्वासु पठ्यते । किन्तु तत्राष्टानां (लोकायताहतबुद्धाक्षपादकणादकपिलजैमिनिबादरायणीयानां) दर्शनानां स्वरूपं वर्ण्यते । तेन 'अष्टवर्गप्रकरणम्' इति तद्व्यपदेशे युक्ते षड्वर्गप्रकरणव्यपदेशो, मन्ये, अक्षपादकणादमतयोरैक्याभिप्रायेण लोकायतमतस्यात्यन्तानुपादेयस्यादर्शनत्वाभिमानेन च कृतो भवेत् । लेखकप्रमादायातो वा स कामं स्यात् ।

सर्वथायं ग्रन्थः, याश्च यावत्यश्च विद्याः संस्कृतवाङ्मयकटाक्षिताः, तासां स्वरूपभेदप्रभेदेषु सामान्यतो विज्ञानमिच्छतां परमोपकारकः ।

एतद्ग्रन्थकारस्य नामधेयं न क्वाप्यादर्शग्रन्थे दृष्टम् ।

अथो विवृतान् पञ्चादर्शग्रन्थान् केरलीयलिपींस्तालपत्रात्मकान् अवलम्ब्यास्य संशोधनं निर्वर्तितम् ।

तत्र प्रथमः — (शुचीन्द्रं) परमेश्वरमूत्ततुसम्बन्धी
उपवेदप्रकरणान्तः क. संज्ञः (पत्रात्मकः) ।

द्वितीयः — इडप्पळ्ळिराजसम्बन्धी समग्रः ख. संज्ञः शताधिकवर्षवृद्धः ।

तृतीयः — (वैक्कं) रुद्रनम्पूरिसम्बन्धी तथा ग. संज्ञः तथा ।

चतुर्थः — इडप्पळ्ळिराजसम्बन्धी उपाङ्ग-
प्रकरणमारभ्य घ. संज्ञः तथा ।

पञ्चमः — (एत्तुमानूर्) श्रीधरमूत्ततुसम्बन्धी
उपवेदप्रकरणान्तः ङ. संज्ञः तथा ।

अनन्तशयनम्
१३-८-१९१५

त. गणपतिशास्त्री.

## विपयसूची।




| | | पृष्ठम् |
|---|---|---|
| १. | तनुभुवनप्रकरणम् .... .... .... | १ |
| २. | वेदप्रकरणम् .... .. ... | १८ |
| ३. | पडङ्गप्रकरणम् .... .... | २९ |
| ४. | उपाङ्गप्रकरणम् .... .. .... | ३८ |
| ५. | उपवेदप्रकरणम् .... .. | ५० |
| ६. | पड्वर्गप्रकरणम् . .. ... | ६० |
| ७. | ज्ञानप्रकरणम् .... .... ... | ६९ |
| ८. | योगप्रकरणम् .... .... ... | ८४ |

॥ श्रीः ॥

# प्रपञ्चहृदयम् ।

---

## तनुभुवनप्रकरणम् ।

लोकदेहादिकार्याणां[1] कारणस्यादिकारणम् ।
प्रपञ्चहृदयाधारं तं नमामि सदा हरिम् ॥

अथेदानीमशेषपुरुषार्थशेषतया[2] सकलः प्रपञ्चोऽयमिह प्रदर्श्यते । स तु त्रिविधो[3] वेद्यविद्यावित्तृप्रपञ्चभेदेन । तत्र वेद्यप्रपञ्चोऽपि पुनर्द्विविधस्तनुभुवनभेदेन । तत्र तनुर्द्विविधा स्थावरजङ्गमभेदेन । तत्र जङ्गमशरीरं त्रिविधं सुरनरतिर्यग्भेदेन । तत्र सुरदेहोऽष्टविधो देवपितृयक्षराक्षसनागगन्धर्वभूतपिशाचभेदेन । एष्वेवान्तर्भूताः किन्नरचारणासुरसिद्धविद्याधरादयः । मनुष्यदेहस्त्वेकविध एव । तिर्यग्देहः पशुमृगपक्षिसरीसृपभेदेन चतुर्विधः । वृक्षवल्लीगुल्मतृणभेदेन चतुर्विधोऽपि स्थावर एक एव । ततः शरीरजातिविशेषाश्चतुर्दशविधाः । तदेव प्रतिज्ञातं साङ्ख्येन—

---

१ 'नाथं परं ब्रह्म परमात्मानमव्ययम् ।' क पाठः  २ 'आश' ख पाठः  ३ 'द्वि'  ४. 'धात्र' क पाठः  ५ '। स्थावरं पञ्चविधा वा । स्थावरस्तु वृक्ष[illegible] विध । त' ख पाठः.

G. P. T. 137. 500. 1 4 15     1

"अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥"

इति । तत्र जङ्गम[1]जातिविशेषश्चतुरशीतिसहस्रविधः । स्थावरजातिविशेषश्चतुःषष्टिसहस्रविधैः[2] । तदुभयवर्गाणां प्रत्येकं व्यक्तिविशेषो न सङ्ख्यायते, आनन्त्यादनवस्थाप्रसङ्गाच्च ।

तथा तदाश्रयभुवनमपि चतुर्दशविधं सप्तलोकसप्तपातालभेदेन[3], नरकैः सह पञ्चदशविधो वा[4] । तत्र भूर्भुवःस्वर्महर्जनस्तपस्सत्यसंज्ञकाः सप्त लोकाः । अथातलवितलसुतलनितलतलातलरसातलमहातलसंज्ञकाः सप्त पातालाः ।

तत्रा[5]यं भूर्लोकः सप्तद्वीपसमुद्रा[6]द्रिमुद्रितो वलयाकारः । तन्मध्यगतो जम्बूद्वीपो लक्षयोजनविस्तीर्णो नवखण्डः । तत्खण्डानामिलावृतो मध्यमखण्डः । तस्य पूर्वे भद्राश्वः, पश्चिमे केतुमालो, दक्षिणे त्रयो हरिवर्षकिम्पुरुषभारताः, क्रमेणोत्तरे रम्यकहिरण्मयकुरवः । तत्र[7] कनकाद्रिर्मेरुरिलावृतमध्य[8]गतो लक्षयोजनमितः । तस्य षोडशसहस्रयोजनं भूमेरधस्ताद्, उपरि परिशिष्टम्[9] । मूले षोडशसहस्रयोजनविस्तारो मूर्ध्नि द्वात्रिंशत्सहस्रयोजनविस्तारैः[10] *सुवर्णमयो भूपद्मस्य कर्णिकाकारः सकललेखनिलयः* । तस्य पूर्वादिषु[11] दिक्षु चत्वारो विष्कम्भशैलाः । ते मन्दरगन्धमादनविपुलसुपार्श्वाः । तेषां शिरसि चत्वारो दिव्यतरवः

---

१. 'सुरनरतिर्यग्देहानां त्रयोदशविधानामवान्तरजा', २ 'धः । सर्गा', ३. 'न । त' ख. पाठः. ४. 'वा । तत्राय' क. पाठः. ५. 'था' ख. पाठः. ६. 'द्रमु', ७. 'त्र मेरु' क. पाठः. ८ 'ध्यतो' घ. पाठः. ९. 'म् । तस्य भूपद्मस्य कर्णिकाकारस्थितस्य पू' ख. पाठः. १०. 'रः स स्वर्ण', ११. 'षु च' घ. पाठः.

सहस्रयोजनोच्छ्रिताः । तत्र मन्दरे कदम्बो, गन्धमादने जम्बूः, विपुलेऽश्वत्थः, सुपार्श्वे वटः । तन्निकटवर्तीनि चत्वारि सुरोद्यानानि । तानि क्रमेण चैत्ररथनन्दनवैभ्राजकपितृवनानि । तथा चत्वारि सरांसि । तान्यरुणोदसितोदमानसमहाह्रदसंज्ञानि । इति प्रदर्शितो मध्यमखण्डः ।

तदन्येषामष्टखण्डानामष्टौ सीमापर्वताः । तेषां दक्षिणे त्रयो हिमवद्धेमकूटनिषधाः, क्रमेणोत्तरे नीलश्वेतशृङ्गिणः । षडेते मेरुसहिताः सप्त कुलपर्वताः । पूर्वे माल्यवान्, पश्चिमे गन्धमादनः[3] । तदेते प्रदर्शिता नव खण्डाः पर्वताश्च ।

तत्र दक्षिणाग्रे भारतखण्डो दशसहस्रयोजनमितः । स तु दक्षिणसमुद्रबिन्दुसरसोरन्तरालः । कर्मभूमिरियं केनचित् कारणेन सगरपुत्रैर्नवधा खण्डिता[6] । ते खण्डाः कुमारीन्द्रनागसौम्यवारुणगन्धर्वगभस्तिकशेरुताम्रपर्णाः । सर्वे सहस्रयोजनमिताः । तत्सीमामानं तदवशिष्टसहस्रयोजनम् । तत्र कुमारीद्वीपे षडुपद्वीपाः, सप्ताद्रयः । तत्राङ्गयवमलयशङ्खकुमुदवराहाः षड् द्वीपाः, ऋक्षमहेन्द्रविन्ध्यमलयसह्यशुक्तिमत्पारियात्राः सप्ताद्रयः। वर्णाश्रमाश्चाररतत्रैव व्यक्ततराः । तत्र मलयद्वीपमध्यवर्तिनो मलयपर्वतस्य मध्यमशिखरे लङ्कापुरी । सा प्रसिद्धतरा । सह्यपादे परशुरामभूमिः । सा सप्तकोङ्कणाख्या कूपककेरलमूपि-

---

१. 'ताः । म' ख. पाठः. २. नि । ता, ३. 'न । तत्र' क. पाठ. ४ 'द्राद्रि-न्दुसरसोऽन्त', ५. 'र', ६. 'त' ग पाठ ७. 'म्निमन्क्श' ग पाठ ८. 'र्णा मह्' न पाठ. ९ 'पन' ग पाठ.

कालेत्रपशुकोङ्कणपरकोङ्कणभेदेन दक्षिणोत्तरायामेन च व्यवस्थिता । तत्रानन्त[3]पुरबिल्वाद्रिगोकर्णसप्तकोटीश्वरभेदेन क्षेत्रचतुष्टयमपि भुक्तिमुक्तिफलप्रदम् । सह्याद्रावामलकक्षेत्रम् । तदन्यत्रापि श्रीरङ्गरामेश्वरवृषभाद्रिश्रीविङ्कटगिरिमल्लिकार्जुनस्वामिहरिहरमहालक्ष्मीपुरुषोत्तमसालग्रामगयायोध्याकाशीकुरुक्षेत्रप्रभृतिकमपि विद्यते । तथा गङ्गायमुनासरस्वतीनर्मदागोदावरीतुङ्गभद्राकृष्णापेण्णाकावेरीताम्रपर्णीपयोष्णीघृतमालानीलाद्या नद्यस्तत्रोत्पद्यन्ते । तदन्येऽपीन्द्रद्वीपादयो नानानदनदीक्षेत्रसरिद्गिरिविशेषादिसमन्विता द्रष्टव्याः । इति संक्षेपेणायं प्रदर्शितो भारतखण्डो नवखण्डः । तत्रैव युगधर्मो नान्यत्र । तदुक्तं—

"फलानि सस्यानि च भूतसंपदः
शुभक्रियावृद्धिरधर्मसंक्षयः ।
गुणा नराणां च समस्तमीदृशं
युगक्रमाद् भारत एव [11]विद्यते ॥"

इति ।

तथा किम्पुरुषे[12] जायमाना जनाः सर्वे दशसहस्र[13]समायुषः प्लक्षफलाशनाः कनकनिभाः । हरिवर्षे द्वादशसहस्रसमायुषः शर्कराशना रजतनिभाः । भद्राश्वे[14] निवासिनो दशसहस्रसमायुषश्चूतफलाशनाश्चन्द्रनिभाः । केतुमालनिवासिनो दशसहस्र-

---

१ 'ल', २. नाव', ३ 'न्द', ४ 'मऋ' क पाठ. ५ 'रम', ६ 'नान', ७ 'द्राकावेरीनिला' ख पाठ. ८. 'नानगजनवननदी', ९ 'द्विश' क पाठ. १०. 'ज्या १ म' ख, पाठ ११ 'वि' क पाठ १२ 'पत्वर्ग जायमाना स', १३. 'स्रायु' ख, पाठ. १४ 'श्व द' ख पाठ.

समायुषो नीलनिभाः पनसाशनाः । इलावृतनिवासिनस्त्रयोदशसहस्रसमायुषो जम्बूफलाशनाः पङ्कजनिभाः । रम्यकनिवासिनो द्वादशसहस्रसमायुषो न्यग्रोधफलाशनाः स्वच्छाः । हिरण्मयनिवासिनो लिकुच[२]फलाशना हिरण्यवर्णाः सार्धत्रयोदशसहस्रसमायुषः[३] कनकनिभाः । कुरुनिवासिनः सार्धचतुर्दशसहस्रसमायुषः कनकनिभाः कल्पद्रुमक्षीरपा मर्त्यास्तरुणा आमरणान्तं[४] मिथुनीकृताः । तत्र[५] माणिक्यमयी भूमि[६]र्हेमसिकता । चन्द्रसूर्यकान्तावपि कुलगिरी विद्येते । इति संक्षेपेणायं प्रदर्शितो जम्बूद्वीपो नवखण्डः ।

तद्बहिर्वलयाकारो लवणोदधिर्लक्षायतस्त्रिलक्षपरिणाहः । तत्रोत्तरस्यां दिशि सहस्रयोजनान्तरितश्चन्द्रद्वीपः सहस्रयोजनमितः सुरगणसेव्यः । वायव्यायां दिशि चतुःसहस्रयोजनान्तरितो दशसहस्रयोजनमितो भद्राकारः सुरासुरसेव्यः । तत्समन्ततो वसन्तीन्द्रभयाद् द्वादश नगाः । ते धूम्रऋषभदुन्दुभिमैनाकचक्रवलाहकसावनरदवराहचन्द्रद्रोणकङ्काः । ततो लवणोदधेर्बहिः प्लक्षद्वीपः । स तु सप्ताद्रिभिः सप्तधा खण्डितः । ते खण्डाः सुखोदयशिशिरक्षेमकरम्यकशान्तभयध्रुवाः । तत्सीमाद्रयो गोमेदचन्द्रसुमनोदुन्दुभिवैभ्राजकशारदसोमकाः । तद्बहिरिक्षूदधिः । ततो वलयाकारः शाल्मलिद्वीपः । तत्रापि सप्तैते खण्डा लोहितवैद्युतहरितश्वेतसुप्रभजीमूतमानसाः । तत्सीमाद्रयो

---

१ 'भानना' घ पाठ  २. 'चाश' ख पाठ  ३ 'प । कु' क पाठ  ४. '-तम् । न',  ५ 'र सुवर्णमा' र पाठ  ६ 'मि । च' ख पाठ  ७ '-ताद व' घ पाठ

महिपोन्नतकुमुदकुमुद्द्रोणकङ्कवलाहकाः । तद्बहिर्वलयाकारः सुरोदधिः । ततः कुशद्वीपः । तत्रापि सप्तैते खण्डा वेणुप्रभाकरोद्भिजाकारलम्बनधृतिमन्मण्डलरथकपिलाः । तत्सीमाद्रयो मन्दरविद्रुमहेमपर्वतकुशेशयहरिगिरिपुष्पोज्ज्वलद्युतिमन्तः । तद्बहिर्घृतोदधिः । ततः क्रौञ्चद्वीपः । तत्रापि सप्तैते खण्डाः प्रावारो[2]ष्णमनोन्धकारकुशलनामानुगदुन्दुभयः । तत्सीमाद्रयोऽन्धकारक्रौञ्चदुन्दुभिवामनपुण्डरीकदेवाद्रिमूकाः। ततो दधिसमुद्रः । ततः शाकद्वीपः । तत्रापि सप्तैते खण्डाः सुकुमार[3]कुमाररम्योन्नतकुमुदमणिचयाः । तत्सीमाद्रयो रजतकेसररैवतश्यामजलधररथाम्बिकेयाः । तद्बहिः क्षीरोदधिः । तत्रानन्तभोगे विमले सार्ध[4]द्विलक्षयोजनमितः सकलजगत्कारणभूतो भगवान् सपरिवारो नारायणः शेते । ततः पुष्करद्वीपः । प्लक्षादिषु शाकान्तेषु पञ्चसु द्वीपेषु जनाः पञ्चसहस्रवत्सरजीविनः । तेषु कालः सर्वदैव त्रेतायुगसमः । पुष्करद्वीपो वलयाकारेण द्विधा विभक्तो महावीतं धातकीषण्डमिति । तन्मध्यगत उन्नततरो मानसोत्तरशैलः । तद्वीपवासिनो जनाः षड्रसं भुञ्जतेऽतीव भोगिनो दशसहस्रसमायुष आमरणान्तं मिथुनीकृता देवैः सह चरन्ति । तद्बहिः शुद्धोदकसमुद्रः । तद्बहिः काञ्चनी करतलाकारा द्विगुणा ह्यम्मयी भूमिः सर्वसत्त्वविवर्जिता । ततो लोकालोकपर्वतपर्यन्ता समतला भूमिः । सर्वे ते प्रदर्शिताः पूर्वात् पूर्वा[10]दुत्तरोत्तरा

---

१. 'द्व', २. 'ष्म', ३. 'रजचित्र', ४. 'द्वयल' घ. पाठ. ५. 'पः । स तु पाठ', ६. 'लः तद्बहिः' ख. पाठ., ७. 'न्तीति । त' क पाठ. ८. 'द्र. । ततो' ख. पाठ. ९. 'त इति । ते', १० वा: द्वि ग. पाठ

द्विगुणपरिमिताः । तदुक्तं —

"जम्बूप्लक्षौ च शाल्मल्यथ च कुशमयक्रौञ्चशाकाभिधाना
द्वीपास्ते पुष्करान्ता लवणगुलसुरा सर्पिरोधश्चदा(ध्न?ध): ।
दौग्धः स्वाद्वम्बुरेते किल जलनिधय स्तेषु[1] सिन्धोश्च सिन्धोः
पूर्वात् पूर्वात् परः[2] स्याद् द्विगुणपरिमितो द्वीपतो द्वीपतोऽपि ॥"

इति । तत्र प्लक्षादीनामपि पञ्चानां चक्राकारत्वं वर्णाश्रमधर्मकरणत्वमपि प्रदर्शितं —

"ये प्लक्षाद्याः पञ्च शाकावसाना-
श्चक्राकाराः सप्त सप्ताद्रिभिन्नाः ।
सर्वे धर्मास्तत्र वर्णाश्रमाणां
त्रेतायां या सर्वदा[3] सैव वृत्तिः ॥"

इति । ततः शुद्धोदकसमुद्राद् बहिर्वलयाकारा लोकालोकपर्वतपर्यन्ता समतला सौवर्णमयी भूमिः । तत्प्राकारायमाणो लोकालोकपर्वतः । तदुभयप्रमाणमपि प्रदर्शितं—

"सौवर्णी स्वादुवार्धे बहिरपि परितो देवसञ्चारभूमिः
कोटीनां योजनानां दशकपरिमितां[4] तां परीत्य स्थितोऽभूत् ।
विस्तारायामयोरप्ययुतपरिमितो योजनानां नगेन्द्रो
लोकालोकस्तमन्तः प्रतपति न बहिर्भानुराख्यानुरोधात् ॥"

---

१. 'च', २ 'रस्तात्', ३ 'सर्वत्र' घ पाठ ४ 'ता' क पाठ,

इति । तत्र लोकालोकपर्वते चतुर्दिक्षु चत्वारः पर्वताः । तेषां पूर्वे वसुधामा, दक्षिणे शङ्खपादः, पश्चिमे हिरण्यरोमा, उत्तरे केतुमानिति । तेषु चतुर्षु पर्वतेषु चतुर्णामिन्द्रयमवरुणसोमानां चत्वारि नगराणि । तदुक्तं —

"चत्वारि स्वदिगाश्रयाणि नगराण्याहुश्चतुर्णां गिरौ
नाथानां ककुभाममुत्र कथिता वस्वौकसारा हरेः ।
रम्या संयमनी यमस्य पयसां पत्युः सुखावत्यसौ
विख्याता च विभावरी हिमरुचेर्येताः पदं संपदाम् ॥

पौरा नाकसदो निपेयममृतं वाप्यः सहेमाम्बुजाः
कामिन्यो मुरजित्कलत्रसहजाः कामप्रदाः शाखिनः ।
नानारत्नशिलामयानि भवनान्यरतान्तरायं सुखं
यासां तासु किमेतया बहिरसावारतां कवेर्वर्णना ॥"

इति । तस्य लोकालोकपर्वतस्य बहिरन्धकारः । तदवसाने ब्रह्माण्डकपालः । तस्य भूपद्मस्य कर्णिकाकारो मेरुः । तदग्रं द्वात्रिंशत्सहस्रयोजनविस्तीर्णं नवशृङ्गम् । तत्र मध्यमशृङ्गे मनोन्मनी नाम ब्रह्मसभा । तदन्येष्वष्टशृङ्गेषु लोकपालानामष्टौ पुराणि । तदुक्तं —

---

१ 'धात्री च' क पाठ   २. 'मया ना' घ. पाठ   ३ 'न्येषु' क पाठ .

"जम्भारेरमरावती हुतभुजस्तेजोवती दण्डिनो
वैवस्वत्यसुरेश्वरस्य कथिता कृष्णा पुरी पाशिनः ।
रम्या शुद्धवती समीरनगरी या गन्धवत्याहृया
वित्तेशस्य महोदया स्मररिपोः ख्याता यशोवत्यपि ॥"

इति । तत्र ब्रह्मसभायां[२] केनचित् कारणेन निपातिता भगवती गङ्गा[३] । तदपि[४] प्रदर्शितं—

"जाता ब्रह्मकमण्डलोर्मुररिपोः पादाम्बुजस्पर्शिनी[५]
माला चन्द्रशिखामणेः[६] पशुपतेर्जाता जटामण्डले ।
नेष्यन्ती त्रिदिवं भगीरथगुरून् पुण्या महावाहिनी
कान्तायां कमलासनस्य पतिता तस्यां सभायां दिवः ॥

प्रदक्षिणीकृत्य सभां चतुर्धा
विष्कम्भशैलेषु निपात्यमाना ।
भद्राश्वकं भारतकेतुमालं
कुरूंश्च गत्वा जलधिं जगाम ॥"

इति । तदानीमगस्त्यपीतसलिलः संपूर्णो लवणोदधिः । इति संक्षेपेणायं प्रदर्शितो भूर्लोको मेरुपर्वताग्रपर्यन्तः ।

तदूर्ध्वं लक्षयोजनान्तरितं सवितृमण्डलम् । तदन्तरालदेशो भुवर्लोकः । स तु यक्षराक्षसनागगन्धर्वभूतपिशाचादिगण-

---

१. 'ती रक्षस. कृष्णा नाम पुरी यमाविवसत्यैवस्वती पा' घ पाठ. २. 'या भगीरथेन राजर्षिणा के' क. पाठः. ३. 'ङ्गा ब्रह्मलोकगतेन ब्रह्मणा कमण्डलुदत्तेन त' ग. पाठ. ४. 'प्युक्त—', ५ 'दजतस्प', ६ 'णो' घ पाठ.

सम्पूर्णः । ततः सवितृमण्डलादूर्ध्वमा शिशुमारप्रजापतेरन्तरालः स्वर्लोकश्चतुर्दशलक्षयोजनमितः। स तु विमानगृहसंश्रयो दिव्यजनाकीर्णः । तदुक्तं —

"रवेः शशी योजनलक्षतः पर-
स्तथैव तस्मादपि तारकागणः ।
बुधोशनःशोणितमन्त्रिसौरयः
क्रमेण लक्षद्वययोजनान्तराः ॥

सौरेः परं योजनलक्षदूरात्
सप्त स्थिताः सान्द्ररुचो मुनीन्द्राः ।
तथैव तेभ्योऽपिच शिशुमार-
स्तारा यदङ्गानि चतुर्दशाङ्ग! ॥

स्वर्गगा ये विमानास्तेऽप्य[2]ष्टाविंशतिकोटयः ।
पुण्यकर्मजनाकीर्णाः सततं कामगामिनः ॥"

इति । ततः स्वर्गात् परो महर्लोकः कोटियोजनमितः । स तु दक्षवसिष्ठपुलहपुलस्त्यादिमहर्षिगणपूर्णः । ततः परो जनलो[3]कः कोटिद्वययोजनमितः। स तु भृग्वादिम[4]हर्षिगणपूर्णः । ततः पर[5]स्तपोलोकश्चतुष्कोटियोजनमित[6]ः। स तु सनकसनातनसनन्दनसनत्कुमारादिमहर्षिगणपूर्णः। ततः परः सत्यलोक[7]ः षट्कोटियोजनमितः । स तु सकललोकमौलि[8]ना ब्रह्मणा परमहंसपरिव्राजक-

---

१ 'ब्रह्सकुलो दि', २. 'द्य' ख. पाठ. ३ 'लो', ४ 'ब्रह्मर्षि' क पाठ ५ 'रं तपो', ६. 'त सन', ७ 'कः को' ख पाठ ८. 'लिनेन ब्र' घ. पाठ

कोटिभिः सह समाकीर्णः । तदुपरिष्टादाकाशः । तदवसाने ब्रह्माण्डकपालः ।

तथा भूमेरधस्ताद् भूविशेषाः सप्त पातालाः । ते सर्वे[१] प्रत्येकं दशसहस्रयोजनमिताः । तेषां प्रथममतलम् । तदष्टमहानागैर्महाबलिप्रमुखैश्च संपूर्णम् । ततो वितलं शिलामयं पुलोमाद्यसुरसंपूर्णम् । ततः सुतलं शर्करामयं हिरण्याक्षप्रमुख[२]संपूर्णम् । ततो नितलं पीतवर्णं कालनेमिप्रभृतिसंपूर्णम् । ततस्तलातलं रक्तवर्णं प्रह्लादप्रमुखसंपूर्णम् । ततो रसातलं पाण्डुरवर्णं हयग्रीवप्रमुखसम्पूर्णम् । ततो महातलं नीलवर्णं नमुच्याद्यसुरसंपूर्णम् । इति प्रदर्शिताः सप्त पातालाः ।

तदधो विस्तीर्णतरो नरकलोकः । तत्र रौरवमहारौरवघोरमहाघोरकुम्भीपाकतप्तशिलावैतरणीक्षुरधारासिपत्रवनकृमिनिचयकृमिभोजनाग्निज्वाला[३]ग्निकुण्डाङ्गारराशितप्तजतुतप्तकुम्भतीक्ष्णो[४]दण्डपूतिमांसावीचीप्रमुख(?)कालसूत्रपूयवहान्धकारसंदह्यकण्टकशल्मलीकूटशल्मलीयन्त्रपीडलोहतुण्डपङ्कलेपलावणलोहितककचे[५]तैलधारा इति द्वात्रिंशदेते प्रधाननरकाः।सर्वे[६] ते मायामयं[७]शरीरविशेषोपभोग्याः । तत्समन्तादष्टोत्तरशतमुपनरकाः । तर्द[८]धोऽन्धकारदेशो विपुलतरः । तदवसाने ब्रह्माण्डकपालः । तदुक्तं —

---

१. 'रपि स', २. 'तिभि स' क पाठ. ३ 'लामहाज्वालाग्नि' ख. पाठ'. ४. 'क्ष्णपू' ख. पाठ'. ५. 'चमूरतै', ६. 'त्रे मा' क. ख पाठ ७ 'नविशेषशरीरयोग्या.' घ. पाठः. ८. 'दव' ख. पाठ.

"शतमपि तेषामुपनरकाणामभिहितमन्यत् पुनरपि चाष्टौ ।
नरकसमूहात् परमपि देशो विपुलतरः स्यादथ जगदण्डम् ॥"

इति प्रदर्शितश्चतुर्दशलोकात्मकः प्रपञ्चः । तत्र ब्रह्माण्डकपालयोरन्तरालेपरिमाणमपि प्रदर्शितम्—

"ऊर्ध्वं तिर्यगधश्च हाटकगिरेर्ब्रह्माण्डयोरन्तरे
प्राज्ञैर्योजनकोट्यो दशपराः पञ्चापि संचिन्तिताः ।
आशान्तेषु दशस्वपि स्मररिपोर्योगाधिवासादथ
ब्रह्माण्डान्तरवर्तिनो भगवतः ख्याता भवच्छेदिनः ॥"

इति । तत्र तदन्तर्भूतानां चतुर्दशलोकानां तदवयवविशेषाणामपि सर्वेषां नामाकृतिप्रमाणादिषु बहवो बहुविधमाचक्षते । तथास्माभिरपि सर्वेषामनुभाषणवदेकमार्गमाश्रित्य सर्वमनुभाषितम् ।

तत्र परमाण्वष्टकं रजः । रजोष्टकं बालाग्रम् । बालाग्राष्टकं लिक्षा । लिक्षाष्टकं यूका । यूकाष्टकं यवः । यवाष्टकमङ्गुलम् । अङ्गुलचतुर्विंशतिको हस्तः । हस्तचतुष्कः पुरुषः । पुरुषसहस्रं क्रोशः । क्रोशद्वयं गव्यूतिः । गव्यूतिद्वयं घातः । घातद्वयं योजनमिति । तदेवं सर्वत्र तनुभुवनात्मकप्रपञ्चे क्षेत्रमानमभ्युपगन्तव्यम् ।

तत्र तनूनां भुवनप्राप्तिर्द्विधा जन्मना कर्मणा च । तत्र जन्मना प्राप्तिस्तत्तद्देशदेहयोग्यजननप्रकारेण । कर्मणा स्वदेशदेह-

१. 'मः' क. ख पाठ.. २ 'लम' क. पाठ'. ३. 'न्तिकव' घ पाठः. ४. 'ति । तद', ५. 'ते । अस्मा' ख. पाठः ६. 'णादे', ७ 'मिह प्रदर्शितम्' क पाठ . ८. 'षम् ।', ९ 'व' ग पाठ.. १०. 'तत्रा'. ११. 'देह' क. पाठः.

योग्याचरणसामर्थ्यात् । तत्र भूर्लोके भारतखण्डः कर्मभूमिः । तत्कर्मफलविषयाः सर्वे लोकाः सनरकाः । तत्र धर्मकरणादूर्ध्वलोकप्राप्तिः, पापकरणान्नरकादिप्राप्तिः, मिश्रकर्[1]णान्मनुष्यलोकप्राप्तिः ।

तत्र[2] मनुष्यलोके जरायुजाण्डजस्वेदजौद्भिदभेदेन चतुर्विधदेहो जायते । तत्र भूमिमुद्भिद्योद्गमनादौद्भिदः स्थावरविशेषः । स तु वृक्षलतावल्लीगुल्मतृणादिभेदेन बहुविधः । स्वेदजः स्विद्यमाने[3]भ्यो भूवह्न्युदके[4]भ्यो जायमानः । सोऽपि यूकमत्कुणकीटाणुस्त्री(?)प्रमुखो बहुविस्तरः । अण्डजो वर्तुलीभूत[5]शुक्लशोणितसंपुट[6]सम्भवः सर्पगोधावयोभेदशिंशुमारादिर्बहुविधः । जरायुजस्त्रिविधो मनुष्यपशुमृगभेदेन । तत्र मनुष्यशरीरं श्रेष्ठं ज्ञानाधिक्याद् धर्माचरणक्षमत्वाच्च । तत्कारणं त्रिविधं निमित्तोपादानाभिवृद्धिकारणभेदेन । तत्र निमित्तकारणं पूर्वकृतं कर्म । चतुर्विंशतितत्त्वमुपादानकारणम् । अभिवृद्धिकारणमन्नविशेषः । तत्र जनिष्यमाणस्य मातापित्रोरपि पूर्वकर्मानुगुणं यत्रकापि यदाकदाचिद् यस्यकस्यचिदनुकूलायाः स्त्रियाः शुक्लशोणितयोः संयोगो जायते । तदा शुक्लाधिके* पुमान्, शोणिताधिके* स्त्री, समत्वे नपुंसकम् । तदुभयमुभयात्मकं किट्टसारविभागेन । तत्र किट्टद्वयं वृषणद्वयं भवेत् पुंसः, स्त्रिया नाभिव्यज्यते, नपुंसकस्य किञ्चिदभिव्यक्तिः । तदुभयसारः शरीरारम्भकः ।

---

१. 'मणा मनु', २. 'त्र ज' घ. पाठः. ३. 'भ्यो व', ४. 'भ्यो यू', ५. 'तान्छुक्र', ६. 'टात् सर्प', ७. 'न्मलद्रय', ८ 'साम् । तन्म' क. पाठः.

---

* 'संयोगे' इति विशेष्यं स्यात् ।

तन्मध्ये सूक्ष्मतरा सुषुम्ना नाडी, वामे इडा, दक्षिणे पिङ्गला[1], समन्तात् पूषालम्बुषागान्धारीहस्तिजिह्वाकुहूशङ्खिनी-त्याद्याः प्रधानतरा नाड्यः । तदन्या नाभिनाडी बहिर्मुखा मातुरा[2]हृताहाररसकुल्यायमाना । तदनन्तरमेकोत्तरशतं नाड्यः प्रधानाः । ततो द्वासप्ततिसहस्रा[3]णि । ततो रोमकूपाः सर्वे सि-रामुखाः । तदुक्तं —

"नाड्यः प्रधानगदिता दश नाभिदेशा-
देकाधिकं च[4] शतकं विदितं श्रुतिभ्यः ।
सैका विमुक्तिसरणिर्गदिता सुषुम्ना
यां ब्रह्मयोनिरिति वेदविदो वदन्ति ॥

मध्यस्थायाः सुषुम्नायाः पर्व[5]पञ्चकसम्भवाः ।
शाखोपशाखतां प्राप्ताः सिरा लक्षत्रयात् परम् ॥

अर्धलक्षमिति प्राहुः शरीरार्थविचारकाः ।
तद्भेदांश्च बहूनाहुस्ताभिः सर्वाभिरेव च ॥

व्याप्नोति सर्वतो वायुर्येन देहः प्रवर्त्यते ॥"

इति । तत्र शुक्लशोणितसमुदाये चतुर्विंशतितत्त्वानि सम्पद्यन्ते । त[6]त्र मनोबुद्ध्यहङ्कारचित्त[7]मन्तःकरणचतुष्टयं, श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणं ज्ञानेन्द्रियपञ्चकं, वाक्पाणिपादपायूपस्थं कर्मेन्द्रियपञ्चकं, पृथिव्यप्तेजोवाय्वाकाशं भूतपञ्चकं, शब्दस्पर्शरूप-

१. 'ला तासगा' ग. पाठः. २. 'राहा' क. पाठः. ३. 'सम् । त' ख. पाठः ४. 'तु', ५. 'ध' प. पाठ. ६. 'तानि म', ७. 'मभेदनान्तःकरण चतुर्विधं, श्रो' क. पाठ..

रसगन्धमर्थपञ्चकम् इति[2] चतुर्विंशतितत्त्वानि । तदभिवृद्धिकारणमभ्यवहृतान्नरसविशेषः । स त्रिविधः स्थूलसूक्ष्मपरत्वेन । तत्र स्थूलः स्थूलशरीरपोषकः, सूक्ष्म इन्द्रियपोषकः, परोऽन्तःकरणपोषकः ।

तत्र स्थूलशरीरे सर्वत्राग्निमारुतयोगादन्नरसपाकः । तावुभौ प्रत्येकं दशविधौ । तत्र सप्ताग्नयो धातुगताः, त्रयो दोषगताः । तथा वायुः । प्राणापानव्यानोदानसमानाः[3] पञ्चैते प्रधानवायवः । तदन्ये नागकूर्मकृकलदेवदत्तधनञ्जयाः । तेषां भुक्ताहारपचनार्थमूर्ध्वाधो[5] गच्छतः प्राणापानौ, तद्रसमादाय[4] सर्वधातून् व्याप्नोति व्यानः, सर्वचेष्टाः[6] कुर्वन्[7] प्राणसहगो निमेषोन्मेषणकृद् उदानः, सर्वत्र समं नयति समानः, उद्गारकारको नागः, उन्मीलकारकः[8] कूर्मः, क्षुतकृत् कृकलः, देवदत्तो जृम्भणकरः, रवकृद् धनञ्जयश्च । इति प्रदर्शिताः सर्वे वायवो वह्निविशेषाश्च ।

तदुभयवर्गैरहरहः[9] पच्यमानाः शरीरधातवः सर्वेऽन्नरसमयाः । ते[10] त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लानि । धातवो देहधारणा दूष्यन्ते[11] त्रिभिर्दोषैः । ते दोषा वातपित्तकफाः । शरीरेन्द्रियान्तःकरणदूषणाद् दोषाः । तस्मादन्नरसस्य पाञ्चभौतिकत्वात् तत्परिणामशरीरं धातुदोषमलसमुदायः पाञ्चभौतिकं स्थूलान्नरसमयम् ।

---

१. 'न्व तन्मात्राग', २ 'ति प्रदर्शितानि समवायिकारणत' घ पाठ. ३ 'नाश्चैते' ख. पाठः. ४ 'नी' घ. पाठः. ५. 'तीति व्या' क. पाठ. ६. 'ष्टा' ख. पाठः. ७. 'तीत स' क. पाठः. ८. 'करः कृ' ख. पाठः. ९. 'तदुभ' क. पाठः. १०. 'ते रसास्त्व' ख. पाठः. ११. 'न्ते च त्रि' क. पाठः.

सूक्ष्मान्नरसमयमिन्द्रियदशकम् । तद्बलादेव श्रोत्रा[1]दीनां शब्दस्पर्शरूपरसगन्धपरिज्ञानं, वागादीनां वचनादानगतिविसर्गानन्दकरणशक्तिश्च । परान्नरसमयमन्तःकरणम् । तद्बलादेव मनसो मननत्वं, बुद्धेर्बोधक[2]र्त्वम्, अहंकारस्याहंकर्तृत्वं, चित्तस्य चेतयितृत्व[3]म् । त[4]त्र शरीरेन्द्रियान्तःकरणाभिवृद्धिक्रमेण ज्ञानवृद्धिरनुभूयते । तदुक्तं भगवता —

"ज्ञातास्मीति यदा भावो मनोहंकारबु[5]द्धिमान् ।
जातश्चित्पूर्वको जन्तोः स भावः क्रमवर्धितः ॥"

इति । प्रतिदिनमभ्यवहृतान्नरसाभिवृद्धिक्रमेण ज्ञातृभावोऽभिवर्धत इति वाक्यशेषः ।

तच्चैतन्याविर्भावे बहवो विप्रतिपद्यन्ते । तत्र लोकायतश्चातुर्भौतिकशरीरेण परिपाकक्रमेण भूतसमु[6]दायतो मदशक्तिवच्चैतन्याविर्भावो भवतीति, दिगम्बरो[7]ऽन्नरसपरिपाकविशेषादिन्द्रियद्वारेणात्मनः§, बुद्धो बुद्धेरन्नायतनवृद्धिक्रमेण, वैशेषिकनैयायिकभाट्टप्राभाकराः शारीरै[8]र्भौतिकेन्द्रियैरर्थसंयोगे सत्यात्ममनःसंयोगात्(?) सांख्यो ज्ञानाश्रयः सूक्ष्मशरीरं तत् कर्मवशादितः कुतश्चि[9]दन्तराविर्भवतीति, मनुर्मातापितृशोणितशुक्लव्या[10]प्तचैतन्यमन्नाभिवृद्धिक्रमेणाविर्भवतीति, केचिद् वैदान्तिकाः ब्रह्मावयवाः क्षेत्रज्ञास्तैस्तत्कर्मा[11]नुगुणशरीरेष्वाविर्भवन्तीति, ब्रह्मवादिनो ब्रह्म-

---

१. 'मनवि' क पाठः. २. 'कृत्व', ३. 'त्वम् । अन्तःकरणात्मसमुदायः पुरुषोऽन्नरसमयश्चैतन्यस्याश्रयः । त' ख. पाठः. ४. 'अतः श', ५. 'मूर्तिमान्', ६. 'भवाय', ७. 'रोऽयमप' क. पाठः. ८. 'भूतेन्द्रि' ख. पाठः. ९. 'दावि', १०. 'स्तस्क' क. पाठः. ११. 'मेश' ख पाठः.

---

§ 'आविर्भाव' इति संबन्धनीयमिति भाति ।

मात्रमेव तनुभुवनव्याप्तमात्मचैतन्यमन्नरसाभिवृद्धिक्रमेण शरीरेन्द्रियान्तःकरणान्तराविर्भवतीति[1] । किं बहुना देहेन्द्रियान्तःकरणात्मसमुदायः पुरुषो लवत्रुटिकलामुहूर्ताहोरात्रपक्षमासर्त्वयनादिकालविशेषैः कर्मविशेषैश्च कललबुद्बुदघनवर्तुलदीर्घचतुरश्रकरचरणशिरो[2]धरादिरूपेण सम्पूर्णावयवो जायते । तस्य जननकाले गर्भद्वारविनिर्गमनक्लेशातिशयात् संपिण्डितशरीरे[3] आर्त्या परिरोदिति । तदानीमक्षरस्रोतोमार्ग[4]स्याविभक्तत्वाच्चतुष्पदा वाणी* वर्णतया नाभिव्यज्यते यावदक्षरस्रोतोमार्गशुद्धिस्तावत्[5] । तदुक्तं भगवता —

"मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यः
पश्चात् पश्यन्त्यपि हृदयगो बुद्धियुङ्मध्यमाख्यः ।
वक्त्रे वैखर्यपि रुरुदिषोरस्य जन्तोः सुषुम्ना-
बद्धस्तस्माद् भवति पवनप्रेरितो वर्णसङ्घः ॥

स्रोतोमार्गस्याविभक्तत्वहेतो-
स्तत्रार्णानां जायते न प्रकाशः ।
यावत् तावत् कण्ठमूर्धादिभेदो
वर्णव्यक्तिस्थानसंस्था यतोऽतः ॥"

इति । ततो मनुष्यशरीरे सकलपुरुषार्थप्रदर्शनपरायणा वाणी

१. 'गच्छती' क. पाठ. २. 'रोन्तरधिरू' क. ख पाठः. ३. 'रो जल्यो' क. पाठः. ४. 'र्गशु' घ. पाठः. ५. 'देव । त' क पाठ.

* अर्णा वर्णाः । 'अस्त्रियाँ वर्णमर्णं च' इति वैजयन्ती ।

वर्णपदादिरूपेणाविर्भवति, नान्यत्र पशुमृगपक्षिसरीसृपस्थावरादौ करणवैकल्यात् पुरुषार्थाभावाच्चेति ॥

इति प्रपञ्चहृदये तनुभुवनप्रकरणं नाम

प्रथमं समाप्तम् ।

---

## अथ वेदप्रकरणम् ।

अथेदानीमस्मिन् देहे विद्याप्रपञ्चोऽपीह प्रदर्श्यते, तदाश्रयभूतस्य वर्णकलापस्यात्रैवाविर्भावात्[1] । तदाविर्भावप्रकार——मूलाधारात् प्राणवायुना समुत्पाद्यमाना वाणी परापश्यन्तीमध्यमा भूत्वा वैखरीभाव[2]मपि[3] भावयितुः कण्ठादिस्थानै[4]विशेषसंयोगादकारादिवर्णतया जायते । तस्याः कण्ठसंयोगादवर्णकवर्गहकारविसर्जनीयाः संजायन्ते[5], तालुसंयोगा[6]दिवर्णचवर्गयकारशकाराः, मूर्धसंयोगाद् ऋवर्णटवर्गरेफषकाराः, दन्तसंयोगाद् लृवर्णतवर्गलकारसकाराः, ओष्ठसंयोगादुवर्णपवर्गोपध्मानीयाः सन्ध्यक्षराश्चत्वारश्चतुर्भिरिकारादिभिरकारयोगादेकारादयो जायन्ते । स्थानद्वयनिष्पन्नास्ते । वकारो दन्तोष्ठस्थानीयः सर्वेषामेकस्थानजनितानामक्षरविशेषाणामवान्तरविशेषः प्राणप्रयत्नजनितो वायवीयः । तस्मादकारादयः पञ्चाशदक्षरविशेषाः प्रसिद्धतराः। तदक्षरसमुदायविशेषः पदम्। पदसमुदायो वाक्यम्।

---

१. 'वप्र' घ पाठ. २ 'व भा' ख. पाठ. ३. 'भि' घ पाठ. ४. 'नस क. घ. पाठ. ५ 'न्ते, तथा ता' घ. पाठ. ६ 'दिशयचवर्गा', मू' ख. घ पाठ

वाक्यसमुदायः प्रबन्धः । स प्रबन्धो द्विविधः पौरुषेयापौरुषेयभेदेन । तत्रापौरुषेयो वेदः । पौरुषेयास्तदङ्गोपाङ्गोपवेदाश्चतुर्दशविधास्तदन्ये[1] प्रबन्धविशेषाश्च ।

तत्राद्यो वेदश्चतुष्पादः शतकोटिप्रविस्तरः । तदध्ययनार्थज्ञानानुष्ठानानुपपत्तिमभ्युपगम्य कलियुगादौ भगवता व्यासनाम्ना व्यस्ताश्चत्वारो वेदा ऋग्यजुःसामाथर्वलक्षणलक्षिताः । ते पुनः प्रत्येकं शाखाभेदेनापि[2] प्रविभक्ताः । तत्र सामवेदः सहस्रधा, यजुर्वेद एकोत्तरशतधा, बाह्वृच एकविंशतिधा, अथर्ववेदो नवधा । तत्र केनचित् कारणेन शतक्रतुना वज्रघातिता वेदशाखाः, तत्रावशिष्टाः सामबाह्वृचयोर्द्वादश द्वादश, यजुर्वेदस्य षट्त्रिंशत् । नवैवाथर्वणस्य । ताः सर्वाः प्रथमाध्ययनाद्[3] ऋषिनामधेयाः शाखाः । तत्र सामवेदस्य तलवकारच्छन्दोगशाट्यायनै[4]राणायनिदुर्वासस(?)भागुरिगौरतलवकारालिसावर्ण्यगार्ग्यवार्षगण्यौपमन्यवशाखाः । बाह्वृचस्यैतरेयबाष्कलकौषीतकजानन्तिबौ[5]हविगौतमशाकल्यबाभ्रव्यमाण्डव्यपैङ्गमुद्गलशौनकशाखाः । यजुर्वेदस्य माध्यंदिनकण्वतित्तिरिहिरण्यकेशापस्तम्बसत्याषाढबौधायनयाज्ञवल्क्यभद्रञ्जयबृहदुक्थपाराशरवामदेवजातुकर्णतुरुष्कसोमशुष्मतृणबिन्दुवाजिञ्जयश्रवसवर्षवरूथसनद्वाजवाजिरत्नहर्यश्वर्णञ्जयतृणञ्जयकृतञ्जयधनञ्जयसत्यञ्जय[6]सहञ्जयमिश्रञ्जयत्र्यरुणत्रिवृषत्रिधामाश्वि[7]ञ्जफलिङ्गुखात्रेयशाखाः । आथर्वणिकाः पैप्पलादयोदतोदमोददायढब्रह्मपदशौनकाङ्गिरसदेव-

---

१. 'न्ये च ।' क. पाठः. २. 'न प्र' घ. पाठः. ३. 'ध्यायनामर्षिना' ख. पाठः. ४. निप्राणायनिगुर्व्याम', ५. वानवर्णिगौ', ६. यभूमिञ्जयभूत्सह' ङ. पाठः. ७. 'रिथज्ञफ' घ. पाठः.

षिशाखाः । सर्वे ते प्रदर्शिताश्चत्वारो वेदाः[1] प्रविभक्तशाखाः ।

तेषामेकैका शाखा दिङ्मात्रेणात्र प्रदर्श्यते सर्वशाखा[2]प्रदर्शनत्वेन । तत्र[3] पादव्यवस्था ऋगिति बाह्वृचलक्षणम् । गीतिषु समाख्या सामलक्षणम् । शेषे यजुरिति यजुर्लक्षणम् । ऋग्यजुर्मयोऽथर्वा[4] इत्यथर्वलक्षणम् । इति सामान्यलक्षणं चतुर्विधम् । तत्र बाह्वृच[5]लक्षणस्यैतरेयशाखायां मन्त्रसंहिता[6] पादमिता[7] । तत्प्रमाणमृचां दशसहस्रं पञ्चशताधिकम् । अशीतिः पादाश्च । तदध्यायाश्चतुरुत्तरषष्टिः । अष्टावष्टकाः प्रथमाष्टकद्वितीयाष्टकादिभेदेन । तद्ब्राह्मणं पञ्चाशदध्यायाः । तद् दशकपञ्चकम् । पञ्चमदशकमारण्यकम् । तदन्यत् कर्मकाण्डविषयम् । तथा सामवेदस्य रथन्तरादिगानविशेषाणां प्रमाणं चतुःशताधिकमेकादशसहस्रम् । सर्वेषां गानविशेषाणामृचो योनिः । तत्र तलवकारशाखायां प्रथमपादो मन्त्रः । स तु बह्वध्यायनिबद्धोऽग्नीन्द्रा[9]दिस्तुतिविषयः । तद्ब्राह्मणमुत्तरपादः खण्डसमूहः । तत्प्रमाणं सहस्रादधिकमष्टचत्वारिंशदुत्तरं शतत्रयम् । तदारण्यकं पञ्चाशदुत्तरशतं खण्डाः । तेषा त्रिंशदुत्तमाः । तत्रापि चत्वारो ब्रह्ममात्रविषयाः । तथा यजुर्वेदे तैत्तिरीयशाखा मन्त्रब्राह्मणमिश्रा । सा द्विविधा संहिताशाखाभेदेन । तत्र संहिता चतु[10]ष्पादा सप्तकाण्डा चतुश्चत्वारिंशत्प्रश्ना च । तत्र प्रथमकाण्डो[11]ऽष्टौ प्रश्नाः, द्वितीयसप्तमौ पञ्च पञ्च, तृतीयचतुर्थौ सप्त

१. 'दा । त', २ 'शाना प्र' क पाठ. ३. 'त्र तत्र पा' ख पाठ ४ 'शि । त ५. चस्यै' घ पाठ ६ ताया पा' ख पाठ. ७ 'ति', ८ 'शदशग, ९. दिमतुसापरु १० तुश्चतुष्पा' क पाठ ११ ण्डे' घ. पाठ.

सप्त, पञ्चमषष्ठौ षडेकैकौ(?)। तस्मादेकादशैकादश प्रश्नाश्चत्वारः पादाः। तथार्थप्रकरणवशाच्चतुर्विधा शाखा। तत्र प्रथमद्वितीये प्रत्येकमष्टावष्टौ प्रश्नाः, तृतीयं त्रयोदश प्रश्नाः, चतुर्थप्रकरणमारण्यकं दश प्रश्नाः। तथाथर्वणिके पैप्पलादशाखायां मन्त्रो विंशतिकाण्डः। स तु द्विविधः, ऋग्यजुर्मन्त्रभेदेन। तत्र यजुर्मन्त्रो बहुविधः। ऋङ्मन्त्रभेदो द्वादशसहस्रं त्रिशताधिकम्। तद्ब्राह्मणमध्यायाष्टकम्। तत्र दिव्याः सांप्रदायिकाः प्रायश्चित्तीया आभिचारिकाश्चेति चतुर्विधप्रयोगा व्याख्याताः संक्षेपेणात्र प्रदर्शिताः। तथा चतुर्णामपि वेदानां मन्त्रब्राह्मणलक्षणाश्चतस्रो वेदशाखाः। तद्वदन्याश्चापि तथाविधा द्रष्टव्याः सविशेषाः। तथा पौरुषेयास्तदङ्गोपाङ्गोपवेदाश्चतुर्दशविधाः पूर्वमिह प्रदर्शिताः। तेऽपि वेदवत् पदपदार्थरूपेण नित्याः। तद्वाक्यप्रबन्धरचनायामेव पुरुषव्यापारो न पदपदार्थशिक्षायाम्। अतः पौरुषेयापौरुषेययोरुभयवर्गयोरङ्गाङ्गिविरोधो नोपपद्यते। तत्र वेदस्यान्तरङ्गमङ्गम्। बहिरङ्गमुपाङ्गम्। उपायप्रदर्शनमुखेनाम्नायमानस्तूपवेदः। शीक्षाव्याकरणनिरुक्तच्छन्दोज्योतिषकल्पसूत्राणि षडङ्गानि। मीमांसान्यायपुराणधर्मशास्त्राण्युपाङ्गानि। आयुर्वेदधनुर्वेदगान्धर्वार्थवेदाश्चत्वार उपवेदाः। चतुर्दश विद्या अपि वेदवत् पदपदार्थरूपेण नित्याः। तदेवाभ्युपगम्य भगवता मनुना समानतयाष्टादशविधो विद्याप्रपञ्चः प्रदर्शितः—

१. 'णि पे' ख पाठ. २. 'षोऽयम् त्र' क पाठ. ३. 'तुर्वि', ४. 'वयव' ख. पाठ. ५. 'वनित्या.', ६. 'श्चो द' व पाठ..

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वो वेद एव च ।
अर्थवेदश्चतुर्थश्च विद्या ह्यष्टादश स्मृताः ॥"

इति । तस्मादेकजातीयोऽष्टादशविद्याप्रपञ्चः ।

तत्र वेदस्याङ्गा[1]नामुपाङ्गानामुपवेदानामङ्गोपाङ्गोपवेदोपकारकत्वं किमिति चेद्, उच्यते । शब्दात्मकस्य वेद[2]स्यान्यस्य वा प्रथममुच्चारणापेक्षायामुच्चारणलक्षणप्रतिपादकं शीक्षाशास्त्रम् । तदुच्चारितस्य पदसंहितापेक्षायां तदुभयलक्षणप्रदर्शनपरं व्याकरणम् । पदार्थ[3]परिज्ञानापेक्षायां पदनिर्वचनलक्षणप्रदर्शनपरं निरुक्तम् । मन्त्रादीनामक्षरपरिमाणविशेषापेक्षायां तल्लक्षणप्रदर्शनपरं छन्दोविचितिसंज्ञकम् । [4]कर्मविशेषा[5]नुष्ठानापेक्षायां तस्य कालाधीनत्वात् तत्कालविशेषप्रदर्शनपरं ज्योतिःशास्त्रम् । कर्मानुष्ठानविषये प्रयोगक्रमाविवक्षायां तत्[6]कर्मलक्षणप्रदर्शनपरं कल्पसूत्रमिति । तत्र पूर्वत्रयमर्थज्ञानार्थम्, उत्तरत्रयमनुष्ठानार्थम् । [7]अतः शीक्षाव्याकरणनिरुक्तैर्वेदार्थोऽवगम्यते । छन्दोज्योतिषकल्पसूत्रैस्तदनुष्ठानमु[9]पपद्यते । ततोऽन्तरङ्गभूतानीमानि[10] षडङ्गानि ।

तस्यैव वाक्यार्थविचारविषये पुरुषार्थशेषतयान्तरङ्गन्या-

---

१. 'ङ्गोपाङ्गो', २. 'दोषा' ग. पाठ. ३. 'र्थेश' क. पाठ ४. 'तदनुष्ठानकालात' ख. पाठ. ५. 'षापे' घ पाठ ६ 'त्कर्मल' ख पाठ. ७. 'इति शी', ८. 'संहितानु', ९. 'म् । त' क पाठ १०. 'नि । त' ग. पाठः.

यविचारपरायणं मीमांसाशास्त्रम्[1] । तदर्थनिर्णयशेषतया[2] लौकिकैः प्रमाणप्रमेयविशेषैर्बहिरङ्गन्यायविचारपरायणं न्यायशास्त्रम् । नष्टशाखार्थ[3]विशेषाणामनुपलभ्यमानत्वादशेषवेदार्थोपबृंहणकं पुराणम् । तदधिकारिणो गर्भाधानाद्युपनयनपर्यन्तमध्ययनयोग्यत्वमापाद्य वर्णाश्रमकर्मधर्मप्रविभागपूर्वकमध्ययनार्थे[4]ज्ञानानुष्ठानधर्म[5]त्वं नियमयति धर्मशास्त्रम्[6] । इति प्रदर्शितमुपाङ्गानामपि चतुर्णामुपकारकत्वम् । अतोऽन्तरङ्गाद् बहिरङ्गानीमानि च प्रदर्शितानि मीमांसान्यायपुराणधर्मशास्त्राणि ।

तदधिकारिणो[7]ऽन्यस्य च हेतुलिङ्गौषधस्कन्धैरायुरारोग्यप्रदर्शनपर आयुर्वेदः । तस्य परिपन्थिनिरासपूर्वकं परिपालनाच्चतुर्विधपुरुषार्थप्रवर्तको धनुर्वेदः । तदध्ययनार्थज्ञानानुष्ठानफलस्य निदर्शनत्वेन लौकिकयाग[8]फलप्रदर्शनपरो गान्धर्ववेदः । तदधिकारिणोऽन्नपानादिप्रदानमुखेन चरुपुरोडाशाज्यहविर्दक्षिणादिद्वारेण सकलपुरुषार्थप्रवर्तकोऽर्थवेदः । इति[10] चतुर्विधमुपायोपदेशप्रदर्शनपरायणत्वादुपवेदोपकारकत्वम् । इति प्रदर्शितमङ्गोपाङ्गोपवेदोपकारकत्वमिति ।

सोऽयमिह प्रदर्शितो वेदः साङ्गोपाङ्गैः[11] । स चतुर्विधो विध्यर्थवादमन्त्रनामधेयभेदेन । तत्र विधिरज्ञातार्थज्ञापकोऽप्रवृत्तप्रवर्तको वा । भूतार्थकथनमथर्वादः, गुणप्रशंसा वा । तत्त्व-

१. 'म् । तस्यैव त' क. पाठः. २. 'या प्रा' ख. पाठः. ३. 'र्थानाम', ४. 'नानु' क. पाठः. ५. 'र्मशास्त्रत्व', ६. 'ति । तदधि', ७. 'णो हे' ख. पाठः. ८. 'नज्ञा' घ. पाठः ९. 'गविचारपरायणो गा' क. पाठः. १०. 'ति प्रदर्शितो वेदः' ख. पाठः. ११. 'ङ्गश्चतु' क. पाठः

प्रकाशको मन्त्रः, करणाङ्गभूतो वा। कर्मप्रापको नामधेयं[1], अन्यव्यावर्तको वा। त्रिविधो वा वेदः, नामधेयस्य त्रयाणामनन्यत्वात्।

तत्प्रदर्शितार्थश्चतुर्विधः पुरुषार्थः[2] कामार्थधर्ममोक्षभेदेन। तत्र कामो द्विविधो नित्यानित्यो[3]पभोगभेदेन। तत्र नित्योप[4]भोगो ब्रह्मलोकादौ शाश्वतो[5]पभोगः। तथानित्यो मानुषोप[6]भोगः। तथार्थो द्विविधश्चेतनाचेतनभेदेन। तत्र चेतनार्थो भार्यापुत्रमित्रदासीदासगजतुरगगोमहिषाजादिलक्षणः[7]। तदन्यो गृहशयनक्षेत्रधनधान्यादिलक्षणः। धर्मो[8]ऽपि द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षण[9]श्चेति। तत्र प्रवृत्तिलक्षणो वर्णाश्रमविहितः कामसंकल्पपूर्वकः श्रुतिस्मृतिचोदितो जन्ममरणसुखदुःखफलाश्रयः। निवृत्तिलक्षणो नित्यनैमित्तिकतया वर्णाश्रमविहितः कामसंकल्पवर्जितः परमेश्वरार्पण[10]बुद्ध्या[11] क्रियमाणः सम्यग्ज्ञान[12]प्राप्तिहेतुः। मोक्षोऽपि द्विविधः, सोपाधिकनिरुपाधिकभेदेन। तत्र सोपाधिकः सशरीरो[13] मुक्तेषुवत् प्रारब्धभोगक्षयपर्यन्तः शरीरेन्द्रियान्तःकरणप्रवृत्तिप्रतिभास[14]पूर्वकसम्यग्ज्ञानलक्षणः। निरुपाधिकस्तनुभुवनप्रपञ्चप्रतिभासरहितो नित्यशुद्धबुद्धमुक्तपरमानन्दाद्वैतब्रह्मभावो मोक्षः। इति

---

१ 'य, व्या' ख. पाठ. २. 'धर्मार्थकाममो' क पाठ. ३, ४. 'त्यभो', ५ 'तभो', ६ 'षभो' ग पाठ. ७. 'ण । धर्मो', ८. 'र्मो द्वि' क. पाठ. ९. 'श्च । त', १०. 'राधनबु' ख. पाठ. ११. 'द्ध्या स', १२. 'लक्षण । मो', १३ 'र प्रा', १४. 'सम' क. पाठः.

चतुर्विधपुरुषार्थप्रदर्शनपरायणः साङ्गोपाङ्गोपवेदो[1] वेदः सविशेषः प्रदर्शितः ॥

इति प्रपञ्चहृदये वेदप्रकरणं नाम
द्वितीयं समाप्तम् ।

---

## षडङ्गप्रकरणम् ।

अथेदानीमत्र प्रदर्शितप्रकारेणापेक्षितान्यङ्गशास्त्राण्यर्थदृष्ट्या प्रदर्श्यन्ते । तत्र शीक्षाशास्त्रं शब्दविषयम् । शब्दो वर्णस्वरमात्राबलसामसंतानभेदेनायं षड्विधः । तत्र वर्णास्त्रिषष्टिः । तेष्वेकविंशतिः स्वराः । पञ्चविंशतिः स्पर्शाः । यादयोऽष्टौ व्यापकाः । चत्वारो यमाः । जिह्वामूलीयोपध्मानीयबिन्दुविसर्गा दुस्पृष्टाश्चेति[2] प्रदर्शिताः । तदेव प्रतिज्ञातं ब्रह्मणा—

"स्वरा विंशतिरेकश्च स्पर्शाद्याः पञ्चविंशतिः ।
[3]व्यापकाश्च तथाह्यष्टौ चत्वारश्च यमाः स्मृताः ॥
अनुस्वारो विसर्गश्च ×क×पौ चापि पराश्रितौ ।
दुस्पृष्टाश्चेति[4] विज्ञेयाः सर्वे ते सगुणाः स्मृताः ॥"

इति । तद्गुणो द्विविधो बाह्याभ्यन्तरभेदेन । तत्राभ्यन्तरगुणश्चतुर्विधः स्पर्शाल्पस्पर्शसंवारविवारभेदेन । तत्र स्पर्शः पञ्चविधस्तन्मात्रखरस्तोकगम्भीरबाह्यभेदेन । तद्गुणाः पञ्चविंशतिवर्णाः । तत्र स्पर्शमात्रगुणाः कचटतपाः । खरस्पर्शगुणाः खछठथफाः । स्तोकस्पर्शगुणा गजडदबाः । गम्भीरस्पर्शगुणा घझढधभाः । बाह्यस्पर्शगुणा ङञणनमाः । इत्येते पञ्चविंशतिवर्णाः स्पर्शगुणाः । तथाल्पस्पर्शगुणाश्चत्वारो यरलवाः । शषसहाः

---

१ 'ङ्गो वेद स' क पाठ  २ 'ष्टा इति । त' ख पाठ  ३ 'यादयश्च' ङ पाठ.
४ 'माश्चेति प' च पाठ

सस्वरा विवृतगुणाः । संवृतगुणोऽकारश्च । इत्याभ्यन्तरगुणा वर्णाः प्रदर्शिताः । बाह्याः श्वासनादघोषाघोषाल्पप्राणमहाप्राणादयो वर्णगुणाः । ततः सर्ववर्णाः सगुणाः ।

तथा स्वरः प्राणप्रयत्नजनितः स्वरवर्णाश्रयो वायवीर्यः[1] । स तूदात्तानुदात्तस्वरितभेदेन[2] त्रिविधः । तत्कारणमपि भगवता प्रदर्शितम्—

"उच्चैरुन्मार्गगो वायुरुदात्तं कुरुते स्वरम् ।
नीचैर्गतोऽनुदात्तं च[3] स्वरितं (तिर्यग ?) स्तथा ॥"

इति । तद्विकारा निषधगान्धारादयः सप्त स्वराः । तत्रोदात्ते निषधगान्धारौ, अनुदात्ते धैवतर्षभौ, स्वरिते षड्जमध्यमपञ्चमाः । ते सर्वे प्रत्येकं सप्त सप्त संभिन्नाः । तस्मात् सप्तस्वरप्रभवा एकोनपञ्चाशत् स्वराः । तद्विकाराश्चतुर्दशसहस्रसंख्याः । ते सर्वे सामगान्धर्ववेदयोस्तत्प्रकरणादौ च प्रसिद्धतराः ।

तथा मात्राविशेषः कालकृतो वर्णधर्मः । स तु स्वरादिवद् वर्णविशेषपूपलभ्यते । ततः सर्वे वर्णा मात्राविशेषोपलक्षिताः । तदुक्तं भगवता पाणिनिना—'ऊकालोऽज्झस्वदीर्घप्लुतः' (१. २. २७) इति । तथान्यैरपि—

"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्धमात्रिकम् ॥"

१ 'णा. । तथा', २. 'यभगतु तस्य प्रयत्नविशेषादुदा', ३. 'नाय त्रि' क पाठ. ४. 'तु', ५. 'यो प्रगि' ख पाठ. ६ 'वर्णे' क. पाठ. ७ 'स पा' ख पाठ.

इति । तत्र केचिद् वर्णाः पादमात्रिकाः, केचनार्धमात्रिकाः, केचिदेकमात्रिकाः, केचिद् द्विमात्रिकाः, केचित् त्रिमात्रिकाः, तदधिका वा केचिदिति ।

तथा बलमन्तःकरणप्रयत्नजनितमाभ्यन्तरात्माश्रयं वर्णविशेषाभिव्यञ्जकम् । तथा साम सं[1]मानभावनया मध्यमवृत्त्योच्चारणं[2], नातिद्रुतविलम्बि[3]ताभ्यामवपीड्यमानम् । तथा सन्तानः शब्दसंततिलक्षणः संहिता । ततो वर्णस्वरमात्राबलसामसंतानविशेषलक्षणप्रदर्शनपरं शीक्षाशास्त्रम्[4] ।

तथा पदसंहितालक्षणप्रदर्शनपरं व्याकरणम् । तद्वि[5]षयं सर्वं पाणिनिसंज्ञया[6] प्रदर्श्यते । तत्र संहिता 'परः संनिकर्षः संहिता' (१. ४. १०९) इति प्रदर्शिता । सा वर्णानां गमनागमनोभयानुभयव्यत्याससमुच्चयभेदेन षड्विधा । तत् पदं द्विविधं सुबन्ततिङन्तभेदेन । तदुभयमप्युभयात्मकं प्रकृतिप्रत्ययभेदेन । तत्र सुबन्तपदप्रकृतिस्त्रिविधा ङ्यन्ताबन्तप्रातिपदिकभेदेन । तत्र ङ्यन्तापि त्रिविधा ङीबन्तङीषन्तङीनन्तभेदेन । आबन्ता च त्रिविधा टाबन्तडाबन्तचाबन्तभेदेन । अतः[7] स्त्रीप्रत्ययान्ता प्रकृतिः षड्विधा । प्रातिपदिकप्रकृतिश्चतुर्विधा कृत्तद्धितसमासकेवलभेदेन । तत्र कृदन्तास्तद्धितान्ताश्च बहुविधाः । समास[8]प्रकृतिश्चतुर्विधा तत्पुरुषाव्ययीभावबहुव्रीहि-

---

१ 'सामान्यभा' क पाठ २ 'णाति', ३ 'म्बाभ्या' ग पाठ ४ 'म् । प', ५ 'य.पा', ६ या गर्रमिह प्र' क पाठ ७ 'न' ख पाठ ८, गाश्च' इ पाठ

द्वन्द्वभेदेन। केवला पञ्चविधा सत्तालिङ्गपरिमाणवचनसंबोधनभेदेन। अतो[2] बहुविस्तरा सुबन्त[3]पदप्रकृतिः।

तत्प्रत्ययः स्वादिविभक्तिः। सा सप्तविधा प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीभेदेन। तदर्थभेदा बहुविधाः। तत्र प्रथमार्थः प्रातिपदिकार्थलिङ्गपरिमाणवचनसंबोधनभेदेन पञ्चविधः। द्वितीयार्थः कर्मानीप्सितान्तराबहिर्योगभेदेन चतुर्विधः। तृतीयार्थः कर्तृकरणहेत्वप्रधानसहार्थसंबन्धावयवभेदेन सप्तविधः। चतुर्थ्यर्थः संप्रदानतादर्थ्यभेदेन द्विविधः। पञ्चम्यर्थोऽप्यपादानहेतुभेदेन द्विविधः। षष्ठ्यर्थः स्वस्वामिकार्यकारणजातिव्यक्तिगुणगुणिसामान्यविशेषगम्यगमकादिसंबन्धविशेषेण[5] बहुविधः। सप्तम्यर्थोऽधिकरणभावहेतुसद्भावभेदेन चतुर्विधः। तस्मादेते सप्तविभक्त्यर्थविशेषाः प्रदर्शिताः। ताः सर्वाः सप्त विभक्तयस्त्रिविधा एकवचनद्विवचनबहुवचनभेदेन स्त्रीपुंनपुंसकलिङ्गेषु समानाः। तस्मादेकविंशतिविधं विभक्त्यन्तपदम्।

तथा तिङन्तपदप्रकृतिः क्रियावाचकलक्षणो धातुः। स द्विविधः कर्मसापेक्षनिरपेक्षभेदेन। अयं भूवादिगणः सनाद्यन्तो वा धातु[6]समूहः। तेभ्यः सर्वेभ्यो धातुभ्यः परे भूतभविष्यद्वर्तमानकालीनक्रियाविशेषाभिधायका दश लकाराः संपद्यन्ते। ते च लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् इति

---

१. 'स्वार्थलि' ग. पाठः. २. 'तो रि' ख. पाठ. ३. 'न्तप्र' क. पाठः. ४. 'गा पुनरर्थभेदाद् षड्विधा। त', ५. 'षी व' ख पाठः. ६. 'तुगणस', ७. 'ट । ख' ख, पाठः.

दश लकाराः। तेषां सर्वेषां प्रत्येकमष्टादश तिङ्विभक्तय आदेशा भवन्ति। तदादौ नव परस्मैपदसंज्ञकास्तदुत्तरा आत्मनेपदसंज्ञकाः। तदुभयनवके प्रथमत्रिकं प्रथमपुरुषसंज्ञकं, मध्यमत्रिकं मध्यमपुरुषसंज्ञकम्, उत्तरात्रिकमुत्तमपुरुषसंज्ञकम्। तदेतत् पुरुषत्रयं यथाक्रमं तद्युष्मदस्मद्विशेषविषयम्। तदुभयवर्गत्रिकं प्रत्येकमेकवचनद्विवचनबहुवचनभेदेनाष्टादशविधं तिङन्तपदम्। तदेतदपि स्त्रीपुंनपुंसकलिङ्गेषु समानम्[२]। एतत्सर्वप्रदर्शनपरं व्याकरणम्।

तथा पदनिर्वचनलक्षणं[३] निरुक्तम्। तत् पदं चतुर्विधं नामाख्यातोपसर्गनिपातभेदेन। तत्र नाम सत्तामात्रमशेष(विशेष)रहितं वस्तुमात्रम्। तदवबोधकं नामपदम्। आख्यातो भावः। स तु षड्विधः, जायते अस्ति विवर्धते विपरिणमति अपक्षीयते विनश्यतीति। एतदुपलम्भकमाख्यातपदम्। तदुभयसाधारणतया[४] निरुक्तनिपातितमनभिव्यक्तोभयात्मकमर्थविशेषाभिद्योतकं निपातपदम्। उपसर्गः स्वार्थरहितोऽनन्यसाधारणो भावसंयोगयोग्यः[५]। तदुपसर्गपदम्। इत्येतानि चतुर्विधपदानि। तान्यवयवप्रत्यवयवविभागपूर्वकं वर्णस्वरमात्रादिभेदेनार्थनिर्वचनार्थं[६] निर्वचनीयानि। इत्येतत्सर्वप्रदर्शनपरं निरुक्तशास्त्रम्।

तत्र शीक्षाव्याकरणनिरुक्तैर्विदिते वेदार्थे तदनुष्ठानापेक्षायां तत्कर्मकरणतया मन्त्रविशेषो विवक्षितः। स तु त्रिविधो

१. 'त्रय प्र', २. 'म्। त' क. पाठ. ३. 'णपर', ४. 'या निपा' ङ. पाठ., ५. 'ग्य', ६. 'नि' क. ख. पाठः.

गद्यपद्यमिश्रभेदेन । तत्र गद्यं वर्णपदसमुदायः, पद्यं पादनिबद्धं, मिश्रं तदुभयात्मकम् । तदेव प्रदर्शितं—

"गद्यं पद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम् ।
पद्यं चतुष्पदं[1] तच्च वृत्तं जातिरिति द्विधा ।
छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः॥"

इति । तत्प्रमेयं[2] त्रिविधं छन्दोवृत्तजातिभेदेन । तत्रच्छन्दांसि षड्विंशतिः । तान्येकाक्षरवृद्धिक्रमाद् उक्तात्युक्तामध्याप्रतिष्ठासुप्रतिष्ठागायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टीधृत्यतिधृतिकृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतय इति । एतत्परिमाणं[3] पद्यं चतुष्पादम् । तद् ऋग् वैदिके, लौकिके श्लोकः । तदाश्रितं गणनियतं वृत्तम् । तत् त्रिविधं समार्धसमविषमभेदेन । तत्र समवृत्तं समपादम् । अर्धसमवृत्तं[4] त्रिविधं प्रथमस्य द्वितीयेन तृतीयेन चतुर्थेन समानतया । विषमं वृत्तं गणवैषम्यनिबन्धनेन बहुविधम् । मात्रानियोजिता जातिः । सा त्रिविधा आर्यादिर्वैतालीयादिरचलधृत्यादिश्च । इति प्रदर्शितं छन्दोवृत्तजातित्रितयम् । तत्र वृत्तजातिपरिज्ञानाय षट् प्रत्ययविशेषाः प्रदर्शिताः । ते—

"प्रस्तारो नष्टमुद्दिष्टमेकद्वित्रिलगक्रियाः ।
संख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥"

इति । तद्विस्तरो बहुविस्तरः । ततः षड्विंशतेरूर्ध्वमक्षरपरि-

---

१. 'दां' क. पाठः. २. 'द्विपद्.', ३. 'अक्षरादिपादपरि', ४. 'त्म' क. ख. पाठः. ५. 'म त्रि' ख. पाठः.

माणं दण्डकमालावृत्तादिभेदेन बहुविधम् । तदेतत्सर्वप्रदर्शनपरं छन्दो[1]विचितिसंज्ञकं[2] छन्दःशास्त्रम् ।

तथा सर्वकर्मण्यधिकरणकालविशेषप्रदर्शनपरं ज्योतिःशास्त्रम् । स[3] कालो लवत्रुटिकलामुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगमन्वन्तरकल्पप्रलयादि[4]लक्षणः[5] । स कालविशेषो ग्रहचक्रपरिभ्रमणोपलक्षितः । तत्र ग्रहाः सूर्यसोमाङ्गारकबुधबृहस्पतिशुक्रशनैश्चरराहुकेतवः । तथा[6] चक्रार्धपादराशिहोराद्रेक्काणनवांशद्वादशांश[7][8]त्रिंशदंशकला[9]विकलातत्पराद्यवयवात्मकं चक्रम् । तदुभयभ्रमणोपदेशशास्त्रं द्विस्कन्धं प्रमाणफलभेदेन ।

तत्र प्रमाणस्कन्धः पञ्चविधश्चक्षुःशास्त्रजललेख्यगणितभेदेन । तत्र चक्षुश्चन्द्रादीनामश्विन्यादिसंयोगदर्शनपरम् । शास्त्रं ग्रहचक्रपरिभ्रमणोपदेशः[10] । जलं घटिकायन्त्रमुखादिपरिज्ञानम् । लेख्यं ग्रहबिम्बविष्कम्भादिपरिलेखनपरम् । तद् गणितं तु पञ्चविधं सिद्धान्तभेदेन । तत्र पौलिशरोम[11][12]कवासिष्ठसौर्यपैतामहाः पञ्च सिद्धान्ताः । ते प्रत्येकमष्टाधिकारसंभिन्नाः । तेषां ते सकलभिन्नमिश्रत्रैराशिकश्रेढीक्षेत्रचितिखाता अष्टाधिकाराः । तदधिकाराणां सर्वेषामष्टौ परिकर्माणि । तानि गुणहारकवर्गवर्गमूलघनघनमूलसंकलितव्यवकलितानि[13] । इत्यतश्चतुःषष्टिभेदभिन्नाः[14] प्रत्येकं पञ्च सिद्धान्ताः ।

---

१. 'न्दःशा' क. पाठः. २. 'कम् । त' ख. पाठः. ३. 'स तु ल' क. पाठः ४. 'दिभेदल' ख. पाठ. ५. 'णः । का', ६. 'थार्धराशिपा' क. पाठः. ७. 'दश' ख. पाठः. ८. 'शत्रि' क. पाठ. ९. 'लात' ख पाठ. १० 'श । ज' क. ग. पाठः. ११. 'मि' ख. पाठः. १२. 'श', १३. 'नि । ते च चतु.', १४. 'नाः प' क. पाठः.

तत्र फलस्कन्धोऽपि द्विविधो होरास्कन्धः संहितास्कन्धश्चेति। तत्र संहितास्कन्धः सर्वजनसाधारणफलप्रदर्शनपरः। तत् फलं सूर्यादीनां सर्वेषां वक्रानुवक्रसमगतीनां सप्तर्षीणामपि[1] सञ्चारजनितं शुभमशुभं मिश्रमिति। ग्रहणग्रहयोगशृङ्गोन्नतिपरिवेषभूकम्पोल्कापातकेतुधूमदिग्दाहमहेन्द्रचापादिभिरतिवृष्टयनावृष्टिक्षामक्लेशमहाव्याधिपरिज्ञानं पुरनगरग्रामगृहप्रतिमाप्रासादगोपुरगोष्ठचतुष्पथचैत्यकूपतटाकोद्यानादीनां स्थानप्रमाणलक्षणं स्त्रीपुरुषगजतुरगगोमहिषादिलक्षणमपि[2] संहितास्कन्धे प्रतिपाद्यते।

तथा होरास्कन्धः सर्वेषां प्रतिपुरुषफलप्रदर्शनपरः[3]। सोऽपि त्रिस्कन्धो जातकप्रश्नमुहूर्तभेदेन। तत्र जातकस्कन्धो जायमानफलप्रदर्शनपरः। तत् फलं त्रिविधं जात्यायुर्भोगभेदेन। तत् पुनस्त्रिविधं दृढकर्मोपार्जितमदृढकर्मोपार्जितं मिश्रकर्मोपार्जितं चेति। तत्र धर्मफलसूचकौ शुक्रगुरू। पापफलसूचकाः सूर्याङ्गारकशनैश्चरराहुकेतवः। मिश्रफलसूचकौ बुधसोमौ[6]। सर्वग्रहाणां लग्नादिद्वादशभावाश्रयादिष्टानिष्टफलहेतुत्वम्। तदायुरानयनप्रकारश्चतुर्विध उच्चनीचाष्टवर्गांशकक्रमजीवशर्मीयभेदेन। तदायुरानीतं कर्मफलत्वादिष्टानिष्टफलोपपन्नं दशाफलमित्युच्यते। तदेव आ जन्मनो मरणान्तमनुभूयते।

प्रश्नस्कन्धोऽपि पुनः सर्वेषां साध्यासाध्यपरिज्ञानमुखेन

१. 'मपि। प्र' क. पाठः. २. 'पि तत् प्र' ख. पाठः. ३. 'तेत्रिपयभे', ४. 'च त्रि', ५. 'चन्द्रमसौ। स', ६. 'वैषामिह प्रदर्शिताना ल' क पाठः. ७. 'सर्वपदार्थादर्शनपरायणपरः। तद्विषय त्रि' ख. पाठः.

शुभाशुभफलप्रदर्शनपरायणः । तत्प्रमेयं त्रिविधं, धातुमूलजीवभेदेन नष्टमुष्टिचिन्तागतभेदेन च । सर्वमिदं द्वादशराशिभिर्नवग्रहसहितैरवयवप्रत्यवयवविभागपूर्वकैर्निर्णीयते ।

तथा सर्वेषामभीष्टफलहेतुप्रदर्शनमुखेन सकलपुरुषार्थप्रवर्तको मुहूर्तस्कन्धः । स तु गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणान्नप्राशनचौलोपनयनगोदानविवाहादिषु यात्राकृषिप्रतिष्ठाभिषेकप्रवेशप्रासादगोपुरगोष्ठचैत्यचतुष्पथकूपतटाकारामादिकरणे च तत्र तत्र विहितनक्षत्रतिथिकरणवारगोचरयोगादिविधायको मुहूर्तस्कन्धः । तस्मात् सर्वेषां सकलपुरुषार्थप्रदर्शनपरायणं ज्योतिःशास्त्रम् ।

तथा वैदिकानुष्ठानविशेषप्रदर्शनपरं कल्पसूत्रम् । तदाश्वलायनबोधायनजैमिन्यगस्त्यप्रभृतिभि[1]रसाधारणतया प्रविभक्तम् । तत्राश्वलायनेन द्वादशाध्यायैर्बाह्वृचै[2]विषयै[3]मैतरेयशाखाप्रयुक्तं सर्वमपि प्रदर्शितम् । याजुर्वैदिकं तैत्तिरीयशाखाप्रयुक्तं बोधायनापस्तम्बवाधूलकादिभिर्विस्तरेण प्रदर्शितम् । तलवकारशाखाप्रयुक्तं सामवैदिकविषयं चतुरशीतिपटलैर्जैमिनिना प्रदर्शितम् । पैप्पलादिशाखाप्रयुक्तमाथर्वणिकं सप्तभिरध्यायैरगस्त्येन प्रदर्शितम् । इति चतुर्णामपि वेदानां प्रतिशाखं प्रविभक्तं कल्पसूत्रम् ।

तत्र सर्वशाखाप्रत्ययमेकं कर्मेति प्रदर्शितत्वाच्चातुर्वै[5]दिकानि त्रैवैदिकानि वा [4]कर्माणि कल्पसूत्रेषु प्रदर्शितानि । तानि चतुर्दशविधानि । तत्राग्न्याधेयाग्निहोत्रदर्शपूर्णमासाग्र-

१. 'रपि सा', २ 'चमै' ख. पाठ ३ 'य स' क. ङ. पाठ. ४. 'मन्त्राणि क', ५. 'नि च' ख पाठ".

यणचातुर्मास्यदाक्षायणीसौत्रामण्यः सप्त हविर्यज्ञसंस्थाः । तथाग्निष्टोमात्यग्निष्टोमोक्थ्यषोडशिवाजपेयातिरात्राप्तोर्यामाः सप्त सोमसंस्थाः । तथर्त्विजश्चत्वारः प्रथमद्वितीयतृतीयचतुर्थाः । तेऽध्वर्युब्रह्महोत्रुद्गातारः । सर्वे[2] ते प्रत्येकं द्वितीयतृतीयचतुर्थपुरुषैः समन्विताश्चत्वारो वर्गाश्चातुर्वैदिकास्त्रैवैदिका वा स्व(त्व ? स्व)प्राधान्यविवक्षया षोडशविधाः । तत्राध्वर्युप्रतिप्रस्थातृनेष्टो[3]न्नेतारो याजुर्वैदिकाः प्रथमपुरुषाः । ब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोतार आथर्वणिकाः, तदितराणामेकतरा वा द्वितीयपुरुषाः । होतृमैत्रावरुणग्रावस्तुदच्छावाका बाह्वृचास्तृतीयपुरुषाः । उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्याः सामवैदिकाश्चतुर्थपुरुषाः । सर्वे ते प्रदर्शिताश्चतुर्वर्गाः । प्रत्येकं प्रथमद्वितीयतृतीयचतुर्थपुरुषाश्च क्रमेणैव प्रदर्शिताः । तदिदं प्राधान्यमन्तरागमनदक्षिणादौ, न तु कर्मकरणबाहुल्यात् । अतः सर्वे यजमानार्थं यजन्तो भिन्नविधाः ।

तत्राग्न्याधेयं वसन्तादौ । तद् द्विजातीनां क्रमेणाग्नीनां त्रयाणां पञ्चानां वाप्याधानम् । तत्राग्नीनां प्रकृतिर्विवाहाग्निः । तेऽप्याहवनीयान्वाहार्यगार्हपत्यास्त्रयोऽग्नयः । सभ्यावसथ्यौ[6] द्वौ । तदृत्विजोऽध्वर्युब्रह्महोतोद्गातारश्चत्वारो दक्षिणार्थिनो, न तु कर्मफलभागिनः । तत्राहिताग्निः पञ्चमो यजमानः फलभागी । तत्र यज्ञपात्राणि स्फ्यकपालाग्निहोत्रहव-

---

१. 'हत्विज', २. 'र्वे प्र', ३. 'ष्टृ' ख, पाठः. ४. 'श्च प्र' क. पाठः ५. 'वाह्याधानता प्र', ६. 'थीयौ द्वौ' ङ. पाठः,

णीशूर्पकृष्णाजिनमुसलोलूखलद्दषद्[1]उपलवेदपात्रीप्राशित्रहरणस्रु-
वाज्यस्थालीचमसस्रुक्कूर्चप्रोक्षणीडापात्रप्रणीताचरुस्थालीकम-
ण्डलुप्रभृतीनि साधारणभूतानि विशेषविहितानि च । तदनु-
ष्ठानमृत्विग्वरणपूर्वकं सम्भारसम्भरणोपस्थानविगृह्याग्निपरिग्रह-
प्रायश्चित्तब्रह्मौदनपूर्णाहु[2]तिपर्यन्तम् ।

तथाग्निहोत्रमेकाध्वर्यवम् । तद् द्विविधं सायंप्रातर्भेदेना-
ग्नेयसौ(म्य ? र्य)भेदेन च । तदग्निहोत्रहोमः सर्वहोमा[3]नां प्रकृतिः ।

तथा दर्शपूर्णमासेष्टिरिष्टीनां प्रकृतिः । तथाध्वर्यु-
ब्रह्महोत्राग्नीध्राश्चत्वारस्तदृत्विजः । तत्र पञ्च प्रयाजाः,
षड् यागविशेषा विहिताः । 'प्रकृतिवद् विकृतिः कर्तव्या'
इति विधानाद् दर्शपूर्णमासेष्टिवदाग्रयणचातुर्मास्यादीष्टयः सर्वाः
प्रदर्शिताः ।

तथाग्रयणेष्टिर्वार्षिकधान्यानां प्रथमोपभोगविषया । सा
त्रिविधा धान्यभेदेन, वर्षासु श्यामाकानां, शरदि व्रीहीणां, वसन्ते
यवानां वर्षे वर्षे करणीया ।

तथा चातुर्मास्येष्टिश्चतुर्विधा फाल्गुन्यां चैत्र्यां वा पौर्ण-
मास्यां वै(श्वानरे ? श्वदेवे)ष्टिः । तच्चतुर्थे वरुणप्रघासम् ।
तच्चतुर्थे साकमेधः । तच्चतुर्थे[4] शुनासीरीयम् । तच्चातुर्मा-
स्ये पशूपकरणत्वात् प्रतिप्रस्थाता पञ्चमः । नव नव प्रया-

---

१ 'णीश', २. 'तिविशेषविहितानि प' ख. पाठ. ३. 'मग्र', ४. 'थं अग्नि (?) सप्तदश दुन्दुभय' क. पाठः. ५ 'पा' ङ. पाठः.

जानूयाजौ । अष्टौ हवींषि । द्वौ द्वावाश्विनौ । पशुः सारस्वती मेषी । सुराग्रहो विशेषः । तत्र मैत्रावरुणः षष्ठः । सर्वे ते प्रदर्शिता आघाराज्यभागाविति त्रिंशद् यागविशेषाः ।

तथैव दाक्षायण्यां विशेषः — वन्ध्या पशुर्मैत्रावरुणीया, द्रव्यमामिक्षा ।

सौत्रामण्यामैन्द्राश्विनौ । पशुः सारस्वती मेषी । सुराग्रहो विशेषः । तत्र मैत्रावरुणः षष्ठः । सर्वे ते प्रदर्शिताः सप्त हविर्यज्ञसंस्थाः ।

तथा सप्तसोमसंस्थानामुत्तरक्रतुविशेषाणामतिविस्तीर्णतरत्वात् स्वरूपलक्षणप्रदर्शनमिह नोपदिश्यते[2] । तत्सामान्यमभ्युपगम्य विशेषमात्रमीषदुपदिश्यते । तत्र सोमसंस्थानामग्निष्टोमः प्रकृतिः । तद्विकृतयोऽत्यग्निष्टोमप्रभृतयः क्रतुविशेषाः । तत्राग्निष्टोमस्य स्तुतिविशेषः शस्त्रविशेषश्च द्वादशविधः । अत्यग्निष्टोमस्य[3] त्रयोदशविधः । उक्थ्यस्य[4] पञ्चदशविधः । षोडशिनः षोडशविधः । वाजपेयस्य सप्तदशविधः । अतिरात्रस्यैकोनत्रिंशद्विधः । अप्तोर्यामस्य त्रयस्त्रिंशद्विधः । (तद् ?) अग्निष्टोमस्य यत् क्रतुकरणं तदत्यग्निष्टोमस्य । यदुक्थ्यस्य तदेव षोडशिवाजपेययोः । यदतिरात्रस्य तदप्तोर्यामस्य । वाजपेये चतुर्विंशतिः पशवः । तेषां सप्तदश प्राजापत्याः तदन्येऽग्नीषोमीयाः[5] । तत्र माध्यन्दिन[6]सवने दक्षिणार्थं सप्तदश द्रव्यसङ्घाः प्रदर्शिताः । ते — सप्तदश गजाः, सप्तदश रथाः, सप्तदश शकटाः, सप्तदश गवां शतानि, सप्त-

---

१. 'य', २. 'पद्यते' ङ. पाठः. ३. 'स्तु' ख. पाठः. ४. 'स्य तदेव प' ग. पाठः. ५. 'यादयः । त', ६. 'ने' ङ. पाठः.

दश दुन्दुभयः, सप्तदश निष्काः, सप्तदश कृष्णलानि, सप्तदश वासोभाराः, सप्तदश वसनानि, सप्तदश शरावाः, सप्त[1]दशारं चक्रं, सप्तदश फलकानि[2], सप्तदशारत्नी दीर्घिका, सप्तदश गोधूमपिष्टकलापिनः, सप्तदशोपपुटानि, सप्तदश वायव्यानि, सप्तदशोपयामानीति । सर्वेषामपि प्रत्येकमीदृशविशेषा द्रष्टव्याः ।

तत्र सत्रयागश्चेदृशविषयः[3] — परस्परमितरेतरविवक्षा[4]यां षोडशर्त्विजो यजमानाश्च भवन्ति । ते धर्म[5]भागिनो, न तु दक्षिणार्थिनः[6] । स तु सत्रयागो वाजपेयाप्तोर्यामयोर्न विहितः । तदन्यत्राग्निष्टोमादिपञ्चके विकल्पविहितः । तत्र सर्वेषां स्वकीयाग्नीन् गृहपतिगृहे नीत्वा तदग्नौ संयोज्य सत्रयागः । यदा सत्रमुपसंहृत्य गृहपतिगृहादग्नीनां विभागेच्छवः, तदा पूर्ववत् समुदायाग्निभ्यः स्वकीयाग्नींस्त्रीन् पञ्च वा समारोप्य स्वं स्वं गृहं यास्यन्ति । इत्यादिप्रदर्शिताः सप्त सोमसंस्थाः ।

क्षत्रियविहिता राजसूयाश्वमेधपुरुषमेधसर्वमेधसोमसवप्रतिसवमृत्युसवकारण्डयज्ञविशेषाणां शुनाकर्णयज्ञप्रभृतयः ।

सर्वेषामिह प्रदर्शितानां यज्ञविशेषाणां कल्पसूत्रेषु मन्त्रहविर्देवतासम्बन्धसंस्कारकरणादिकमित्थमित्थमिति तत्र तत्र प्रदर्शितम् ।

सप्तविधः[7] पाकयज्ञो गृह्येषु प्रदर्शितः । सोऽपि हुता-

---

१. 'सप्तदशा' ग. घ पाठः. २ 'नीति स' ख. पाठ. ३. 'ध — प' क. घ पाठः. ४. 'क्षया पो' क ख. ग. घ. पाठ. ५. 'समभा' ङ. पाठ. ६ 'भागिन.', ७. 'धपा' क. पाठ.

हुतेप्रहु[2]तशू[3]लगवबलिहरणप्रत्यवरोहणाष्टकाहोमभेदेन । अयमेकविंशतिविधो यज्ञः कल्पसूत्रप्रकरणप्रदर्शितः । तस्मादत्र शीक्षाव्याकरणनिरुक्तच्छन्दोज्योतिषकल्पसूत्राणि[4] प्रदर्शितानि[5] ॥

इति प्रपञ्चहृदये षडङ्गप्रकरणं

नाम तृतीयं समाप्तम् ।

---

## उपाङ्गप्रकरणम् ।

अथेदानीमुपाङ्गानि मीमांसान्यायपुराणधर्मशास्त्राणीह प्रदर्श्यन्ते । तत्र मीमांसाशास्त्रमशेषवेदार्थनिर्णयपरं वाक्यार्थविचारमुखेन पुरुषार्थशेषतया । तत्र शीक्षाव्याकरणनिरुक्तैर्विदिते वेदार्थे सति किमिदानीम् अशेषवेदार्थनिर्णयपरं मीमांसाशास्त्रमिति प्रदर्शितम् । नायं दोषः । वेदार्थस्य द्वैविध्यात् पदार्थवाक्यार्थभेदेन । तत्र पदार्थपरिज्ञानमेवात्र प्रदर्शितम् । इदानीं पुरुषार्थशेषतया मीमांसाशास्त्रमन्तरेण वाक्यार्थनिर्णयाभावात् तदर्थमिदमारभ्यते । तत्र साङ्गोपाङ्गस्य वेदस्य पूर्वोत्तरकाण्डसंभिन्नस्याशेषवाक्यार्थविचारपरायणं मीमांसाशास्त्रम् ।

तदिदं विंशत्यध्यायनिबद्धम् । तत्र षोडशा[9]ध्यायैर्निबद्धं

---

१. 'तशूलप्रहुतगविम्र' ख. पाठ' २. 'भू', ३. 'गविम्र' ग घ. पाठः. ४ 'णीति प्र' क. पाठः. ५. 'नीति । इ' ख. ग. पाठ . ६. 'र्थो निरुक्तशास्त्रेण पूर्वमिह प्रदर्शित. । इदानीं मी' क. पाठः. ७. 'शेषे'-ख. ग. घ पाठ . ८. 'त्र पूर्वक्त' घ. पाठ . ९ 'द्वा· शा' क. ग. पाठ . १०. 'य पू' क. ग. पाठः.

पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्य धर्मविचारपरायणं जैमिनिकृतम्। तदन्यदध्याय[1]चतुष्कम् उत्तरमीमांसाशास्त्र[2]म् उत्तरकाण्ड[3]स्य ब्रह्मविचारपराय[4]णं व्यासकृत[5]म्।

तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिना[6]मधेयं भाष्यं बोधायनेन कृतम्। तद् ग्रन्थबाहुल्यभया[7]दुपेक्ष्य किञ्चित् संक्षिप्तम् उपवर्षेण कृतम्। तदपि मन्दमतीन् प्रति दुष्प्रतिपादं विस्तीर्णत्वादित्युपेक्ष्य षोडशल[8]क्षणपूर्वमीमांसाशास्त्रमात्रस्य देवस्वामिनातिसंक्षिप्तं कृतम्। भवदासेनापि कृतं जैमिनीयभाष्यम्। पुनर्द्विकाण्डे धर्ममीमांसाशास्त्रे पूर्वस्य तन्त्रकाण्डस्याचार्यशबरस्वामिनातिसंक्षेपेण संकर्षकाण्डं तिद्वीयमुपेक्ष्य कृतं भाष्यम्। तथा देवताकाण्डस्य संकर्षे[10]ण। ब्रह्मकाण्डस्य भगवत्पादै[11]र्ब्रह्मदत्तभास्करादिभिर्म[12]तभेदेनापि कृतम्। तथा शाबरभाष्यं[13] वाक्या[14]र्थभेदमभ्युपगम्य भट्टप्रभाकराभ्यां द्विधा व्याख्यातं — तत्र भावनापरत्वेन भट्टकुमारेण, नियोगपरतया प्रभाकरेण।

तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य प्रत्यध्याय-

---

१ 'याष्टकम् उ' क ग पाठ  २ 'स्त्र ब्रह्मका' क पाठ  ३. 'स्य मन्त्रदेवताब्र' क, 'स्य देवताब्र' ग पाठ.  ४ 'णम्। तस्य' घ पाठ  ५ 'तम्। तत्राध्यायचतुष्कं देवकाण्डस्य मन्त्रदेवतातत्त्वविचारपरायणम्। तदितरद् ब्रह्मकाण्डस्य ब्रह्मविचारपरायणम्। तस्य' क, 'तम्। तत्राध्यायचतुष्टयं देवताकाण्डस्य देवतातत्त्वविचारपरायणम्। तदितरच्चतुष्टयं ब्रह्मकाण्डस्य ब्रह्मविचारपरायणम्। तस्य' ग पाठ.  ६ 'नाभा' घ पाठ.  ७ 'यात् पुराचार्येण शबरस्वामिना पूर्वमीमांसाशास्त्रस्या' ग, 'यात् पुनराचार्येण शबरस्वामिना पूर्वमीमांसाशास्त्रस्य चतुर्विंशतिसहस्रैरतिसंक्षेपेण कृतं भाष्यम्। त' क. पाठ  ८. 'क्ष मी' घ. पाठ.  ९ 'र्षकमा' ख पाठ.  १० 'र्षे।' ख, 'र्षेणेन ब्र' ग. पाठ  ११ 'द' ख. पाठ  १२ 'ति' ग. पाठ.  १३. 'ष्यवा' ग पाठ.  १४ 'र्थम' ग पाठ

मर्थविशेषः प्रदर्श्यते । तत्र मीमांसाशास्त्रे प्रमाणप्रमेयविचारः क्रियते । तत्र साङ्गोपाङ्गो[1] वेदः प्रमाणम् । प्रमेयः पुरुषार्थः । तस्य प्रमाणभूतस्य वेदस्य प्रत्यक्षादिलौकिकप्रमाणैः षड्भिरप्रा[2]माण्यं कृतकत्वा[3]नित्यत्वपौरुषेयत्वपरतन्त्रत्वादिदोषकलापैराशङ्क्यै[4] प्रामाण्यं प्रथमाध्याये प्रतिपाद्यते । तस्य सर्वदोषरहितस्य वेदस्य भेदाभेदौ द्वितीये । तत्र सर्ववेदवाक्यानां पुरुषार्थपर्यवसानाद[5]भेदमाशङ्क्य शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयैरन्तरङ्गप्रमाणैर्विधिभेदः समर्थ्यते । तत्र विधिभेदे विद्यमाने सर्वेषां विधिवाक्यानां स्वप्राधान्यमाशङ्क्य श्रुतिलिङ्गवाक्य[6]प्रकरणस्थानसमाख्याभिः परदौर्बल्यैरन्तरङ्गप्रमाणैः शेषशेषिभावविचारस्तृतीये । स एव क्रतुपुरुषयोरपि प्रसक्तः । तत्र क्रतुशेषः पुरुष इत्याशङ्क्य तत्प्रमाणैः पुरुषशेषः क्रतुरिति चतुर्थे निर्णीयते । पञ्चमे क्रमविचारः । तत्र श्रुतिचोदितानुष्ठाने सर्वेषां क्रियावयवविशेषाणामनुष्ठेयमात्रविवक्षया तत्क्रमोऽविवक्षित इत्याशङ्क्य श्रुत्यर्थपाठकाण्डप्रवृत्तिभिरन्तरङ्गप्रमाणैस्तदनु[7]ष्ठानक्रमो विवक्षित इति निर्णीयते । षष्ठे तदधिकारविचारः । तत्र सर्वेषां स्थिरचराणामविशेषेणाध्ययनार्थज्ञानानुष्ठानाधिकारमाशङ्क्य पशुमृगपक्षिसरीसृपस्थावराणां करणवैकल्याद् अन्येषामपि स्त्रीशूद्रपतितचण्डालानां प्रतिषेधाद् अधिकाराभावः[9] । त[8]तस्त्रैवर्णिकाना-

१. 'ङ्ग' क, 'ङ्गोपवे ग घ पाठ　२. 'ड्भि प्रा' ख. पाठ. ३ 'त्वानि' घ. पाठ. ४. 'ङ्क्याशङ्क्य प्रा' ख ग. घ. पाठ. ५. 'नाभे' ग. पाठ. ६. 'पिवि' ख. ग. घ पाठ. ७. 'नुक्र' ग. पाठ, ८ 'व त्रैव' घ पाठ ९. 'अ' क. पाठ.

श्चतुराश्रमिणां तदधिकारो निर्णीयते । सप्तमे सामान्यातिदेशः[1] । प्रकृतिवद् विकृतिः कर्तव्येति विधानं[2]मतिदेशः । तत्र प्रकृतौ यान्यङ्गसाधनानि विहितानि, तानि सर्वाण्यविशेषेण तद्विकृतावतिदिश्यन्ते। अष्टमे विशेषातिदेशः। तत्र होमानां प्रकृतिरग्निहोत्रहोमः । इष्टीनां प्रकृतिर्दर्शपूर्णमासेष्टिः । यागानां प्रकृतिरग्निष्टोमयागः । तत्र विहितान्य[3]ङ्गसाधनानि तत्तद्विकृतावतिदिश्यन्ते । तदतिदिश्यमानार्थविशेषेपूहो नवमे । स तु द्वारान्तरसंचरणलक्षणो मन्त्रसामसंस्कारविषयः । तत्र मन्त्रसामसंस्काराणां प्रकृतौ श्रूयमाणानां विकृतौ कथं प्रयोग इत्यूहो विस्तरतः । तत्रैव मन्त्रसामस्तुतिप्रसङ्गाद् देवतायां विग्रहादिप - कनिराकरणमपि क्रियते । दशमे बाधः । सोऽपि क्रियोपरमलक्षणः प्राप्तप्रतिषेधः[5] पूर्वविषयाणां मन्त्रसामसंस्काराणाम् । एकादशे तन्त्रम् । तत्र कालकर्तृकरणाद्यैक्ये बहूनामगृह्यमाणविशेषतया साधारणप्रयोगस्तन्त्रम् । द्वादशे प्रसङ्गः । पूर्वविषयाणामेव प्रयुज्यमानानां पृथक् प्रयोगस्य प्रयोजनाभावात् प्रयुज्यमानोपयोगः प्रसङ्गः[6]। एवं द्वादशस्वध्यायेष्वर्थविशेषः पूर्वमीमांसाशास्त्रस्य प्रदर्शितः ।

तथा देवताकाण्डस्य प्रथमाध्याये सर्वेषां मन्त्रविशेषाणां देवतातत्त्वप्रदर्शने तात्पर्यमिति प्रदर्शितम् । द्वितीयाध्याये विध्यर्थवाद[7]नामधेयानां मन्त्रदेवताविशेषत्वम् । तृतीयाध्याये

---

१. 'शः । स तु प्र' क., 'शः । यत्र' ग. पाठः. २ 'नम् । त' क. पाठः. ३ 'न्याधाना' ग. पाठः. ४. 'या यागवि' ख. पाठः. ५. 'ध. सर्वत्र व्याप्त पू' ङ. पाठः. ६. 'ङ्गः । तथा' ख ग. घ. पाठः. ७. 'द्वादेर्मन्त्र' क. पाठः.

देवतातत्त्वं स्वेच्छा[1]विग्रहत्[2]वादिगुणगणालङ्कृतम् । चतुर्थाध्याये देवता[3] फलं[4] सत्कर्मणामपवर्गा[5]धिकारिणस्तादात्म्यलक्षणमपवर्गफलमिति ।

ब्रह्मकाण्डस्य प्रथमाध्याये सकलवेदान्तवाक्यानां ब्रह्माणि समन्वयः प्रदर्शितः । ततो मायाशबलब्रह्मणि[6] समन्वयादविरोधो द्वितीये । तृतीये ब्रह्मज्ञानस्य श्रवणमनननिदिध्यासनानामन्तरङ्गसाधनत्वम् । चतुर्थे सकलसंसारदुःखानां निवृत्तिलक्षणमात्माद्वैतब्रह्ममात्रमोक्षफलम् । इति प्रदर्शितं मीमांसाशास्त्रम् ।

तथा वेदार्थनिर्णयशेषतया लौकिकन्यायविचारपरायणं न्यायशास्त्रम् । तदक्षपादसूत्रमार्गेणात्र प्रदर्श्यते । तत्रोद्देशतः षोडश पदार्थाः प्रथमसूत्रेण प्रदर्शिताः । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानं निःश्रेयसहेतुरिति प्रदर्शिताः सर्वे पदार्थाः ।

तत्र प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् । अनवधारणज्ञानं संशयः । यदुद्दिश्य प्रवर्तते, तत् प्रयोजनम् । लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं, स-

१. 'च्छया वि' ग. पाठः. २. 'हत्त्वा' क पाठः. ३. 'ता तत्फ' क, ख, ग पाठः. ४. 'लं सर्वकर्म' ख. ग., 'लमप' क. पाठः. ५. 'र्ग्यल' ग. पाठ. ६. 'णि मायाविवस्य निवर्तकत्वादि द्वि', ७. 'रनि' ङ. पाठः. ८ 'यप' घ. पाठः. ९. 'ताः। तदपि प्र' ख. घ. पाठः. १०. 'ताः। त' ख. घ. पाठः.

दृष्टान्तः । (तन्त्राधिकरणाभ्युपगमसंस्थितिः) सिद्धान्तः । स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमभेदेन । तत्र सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः । समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः । यत्सिद्धावन्यप्रकरणसिद्धिः, सोऽधिकरणसिद्धान्तः । अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । साध्यनिर्देशः प्रतिज्ञा । उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः । साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणं, तद्विपर्ययाद्वा विपरीतम् । उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ।

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । ‡छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । स प्रतिपक्षस्थापनाहीनो वितण्डा । सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ।

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति । अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् । संभवतोऽर्थस्याति-

१. 'द्विप' ग. घ. पाठः. २. 'स्वपक्ष' ङ. पाठः.

‡ 'यथोक्तोपपन्नच्छल' इति मुद्रितन्यायसूत्रपाठः ।

सामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम् । धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ।

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः[2] । पराजयनिमित्तं निग्रहस्थानम् । तद् बहुविधम् । प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञान[3]मप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि । इत्येतत्सर्वप्रदर्शनपरं न्यायशास्त्र[5]मिति ।

तथा पुराणं जायमानस्य तनुभुवनात्मकप्रपञ्चस्य सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रदर्शनपरायणम् । तत्र मूलप्रकृतेः परमपुरुषाधिष्ठितायाः प्रथमं महानुत्पद्यते । स तु सकलजगत्कारणभूतो बुद्धिलक्षणः । ततोऽहंकारः । सोऽयं त्रिविधः सात्त्विकराजसतामसभेदेन । तत्र सात्त्विकाहंकाराच्चतुर्विधमन्तःकरणं मनोबुद्ध्यहंकारचित्तविशेषोपलक्षितमुपजायते, राजसाहंकाराद्ुभयविधमिन्द्रियदशकं, तामसाहंकारात् पञ्च तन्मात्राणि । तेभ्यः शब्दस्पर्शरूपरसगन्धेभ्यस्तन्मात्रेभ्यः क्रमेणाकाशवायुतेजोजलपृथिवीनामधेयानि शब्दस्पर्शरूपरसगन्धगुणोत्तराणि संजायन्ते । तस्मादेतानि चतुर्विंशतितत्त्वानि प्राकृतानि प्रथममुत्पद्यन्ते ।

---

१ 'न्यसयो' ग. पा. २. 'ति । प्रति' ख ग घ. पाठ ३ 'त' ङ. पाठ ४ 'भा कथावि', ५. 'म् ।', ६ 'सङ्गतिवि क. पाठ ७ 'तम् । रा' ख ग पाठ.

तत्र प्रथमकारणभूतो महानयं बुद्धिलक्षणस्तत्कार्यविशेषानहंकारादीनात्मतया परिगृह्य स्वयमुपक्रमोपसंहारार्थं हिरण्यगर्भतया जायते । तत्र सिसृक्षोर्भगवतोऽन्तःकरणे प्रादुर्भूतो गर्भश्चतुर्दशभुवनेषु देवपितृयक्षराक्षसनागगन्धर्वभूतपिशाचमनुष्यपशुमृगपक्षिसरीसृपस्थावरविशेषाणां जात्यायुर्भोगमवगम्य चतुर्विंशतितत्त्वविशेषैर्यथायागमहरहश्चतुर्दश मनून् देवान् सेन्द्रान् सप्तर्षिप्रमुखानन्यानपि सुरनरतिर्यग्देहान् सविशेषान् देशकालकर्मानुगुणमविरतं सृजति । तद्विपरीततया सर्वमिह प्रदर्शितं मूलकारणपर्यन्तमुपसंहरति । तदेव तत्र प्रतिज्ञातं—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥"

इति ।

तत्र सर्गस्त्रिविधः प्रथममध्यमान्त्यभेदेन । तत्र प्रथमसर्गो मूलप्रकृतेश्चतुर्विंशतितत्त्वप्रादुर्भावः । मध्यमसर्गस्तत्त्वविशेषैश्चतुर्दशलोकमनुप्रजापतीन्द्रदेवसप्तर्षिप्रमुखारम्भः । अन्त्यसर्गो भूलोके मनुष्यपशुमृगपक्षिसरीसृपस्थावरविशेषाणां प्रतिशरीरारम्भः[3] । प्रतिसर्गः प्रदर्शितसर्गस्य[4] त्रिविधस्य प्रतिलोमसर्गः प्रलयः । वंशो ब्रह्मादेः पुत्रपौत्रपरम्परानुगतः शरीरसंततिप्रवाहोऽद्यापि वर्तमानः । मन्वन्तरं ब्रह्मणो दिवसः कल्पः । तस्मिन् कल्पे चतुर्दश मनवः, द्वासप्ततिचतुर्युगावृत्तिरेको

---

१. 'णः सकलगुणगणालङ्कृतो माययाहं', २. 'वेदः साङ्गोपाङ्गः. सविशेषः । तेनैव परमपुरुषो भगवान् तनुभुवनात्मप्रपञ्चस्य नामरूपाकृतिप्रमाणादिकमवगम्य तथाविधं प्रत्यहं चतुर्दश मनू' ङ पाठः. ३. 'तिसमारम्भश' ग. पाठः. ४. 'स्य प्र' ख. ग पाठः.

मनुः। मनोर्मन्वन्तरप्राप्तिकथनं मन्वन्तरम्। अथवा लवत्रुटिकलाकाष्ठामुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगमन्वन्तरकल्पप्रलयादिकालविशेषोपलक्षणं मन्वन्तरम्। वंशानुचरितं वंशजानां महतामाचारगुणसंकीर्तनम्। इति पुराणं पञ्चलक्षणम्।

तदेतत्सर्वप्रदर्शनपरं पुराणं शतकोटिप्रविस्तरं ब्रह्मकृतम्। तदद्यापि दे[३]वलोके प्रवर्तते। तत्र संक्षेपाच्चतुर्लक्षप्रमाणेनाष्टादशविधं पुराणमिह लोके व्यासकृतम्। तदपि—ब्राह्मं, पाद्मं, वैष्णवं, शैवं, भागवतं, नारदीयं, मार्कण्डेयम्, आग्नेयं, भविष्यद्, ब्रह्मवैवर्तं, लैङ्गं, वाराहं, स्कान्दं, वामनं, कौर्मं, मात्स्यं, गारुडं, ब्रह्माण्डमिति प्रदर्शितमष्टादशविधं पुराणम्।

तेषां ग्रन्थप्रमाणमपि प्रत्येकं प्रदर्श्यते। ब्राह्मं दशसहस्रं, पाद्मं पञ्चाशत्सहस्रं, वैष्णवमष्टसहस्रं, शैवं[४] द्वादशसहस्रं, भागवतमष्टादशसहस्रं, नारदीयं[५] चतुर्विंशतिसहस्रं, मार्कण्डेयं द्वात्रिंशत्सहस्रम्, आग्नेयमष्टसहस्रं, भविष्यदेकत्रिंशत्सहस्रं, ब्रह्मवैवर्तं द्वादशसहस्रं, लैङ्गमेकादशसहस्रं, वाराहं चतुर्विंशतिसहस्रं, स्कान्दं लक्षं, वामनं चतुर्विंशतिसहस्रं, कौर्मं[६] षट्सहस्रं, मात्स्यं[७] त्रयोदशसहस्रं, गारुडं[८] षोडशसहस्रं, ब्रह्माण्डं द्वादशसहस्रमिति प्रत्येकं प्रमाणम्। समुच्चितं लक्षचतुष्टयम्।

भारताख्यानमपि लक्षं पुराणार्थोपबृंहितमष्टादशपर्वभेदेन व्यासकृतम्। रामोपाख्यानं शतकोटिप्रविस्तरं ब्रह्मकृतं

---

१ 'नुरिति। म' ख. ग पाठ. २. 'ब्रह्मा' ख. ग. पाठ ३. 'के व', ४. 'वं चतुर्विंशतिस', ५ 'यं पञ्चविंशतिस', ६ 'र्मं सप्तदशस', ७. 'स्यं चतुर्दशस', ८ सौपर्णमेकोनविंशस' ह पाठ

पुराणवद् देवलोके वर्तते। तत्र गत्वा नारदेन श्रुत्वा वाल्मीकये व्याख्यातम् । तेन पुनः षट्काण्डभेदेन चतुर्विंशतिसहस्रैरिहलोकानुग्रहाय संक्षिप्तम् (?) । इति प्रदर्शितमितिहासपुराणम् ।

तथा धर्मशास्त्रमध्ययनार्थज्ञानानुष्ठानाधिकारिणां धर्मकर्मप्रदर्शनपरायणम् । तद्धर्मः[1] षड्विधः[2] स्मार्तः — वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मः सामान्यधर्मः प्रायश्चित्तधर्मो गुणधर्मश्चेति[3] । तत्र वर्णो ब्राह्मणक्षत्रियवैश्यशूद्रभेदेन चतुर्विधः । तत्र ब्राह्मणाद् ब्राह्मण्यामुत्पन्नो ब्राह्मणः । क्षत्रियात् क्षत्रियायां क्षत्रियः, वैश्याद् वैश्यायां वैश्यः, शूद्राच्छूद्रायां शूद्र इति चत्वारो वर्णाः ।

तत्र ब्राह्मणक्षत्रियवैश्यानां दानाध्ययनयागा वर्णधर्माः । त्रयाणां वृत्त्युपायधर्मास्त्रिप्रकाराः । तत्र ब्राह्मणानामध्यापनयाजनप्रतिग्रहाः, क्षत्रियाणां परिपालनयुद्धपरराष्ट्रनिवेशनाः, वैश्यानां कृषिगोरक्षावाणिज्याः, शूद्राणां द्विजातीनां[4] त्रयाणां[5] मनोवाक्कायशुश्रूषाः । तदुभयविधमाशौचमपि[6] वर्णधर्मः ।

स्त्रीपुरुषयोरसमानजातेरुत्पन्नः संकरवर्णः पञ्चमः । स तु द्विविधः प्रतिलोमानुलोमभेदेन । तत्रानुलोमाः षडेते — मूर्धावसिक्तभृज्जकण्ठमाहिष्यपारशवयवनकरणाः । ब्राह्मणस्य क्षत्रियायामुत्पन्नो मूर्धावसिक्तः, वैश्यायां भृज्जकण्ठः, शूद्रायां

---

१. 'र्मे', २. 'ध' क. पाठ. ३. 'ति। मानुपस्तत्र' ङ पाठः. ४. 'दी' क. ग. घ. पाठः. ५. 'णां शु' ख. ग. पाठः. ६ 'पि चातुर्वर्ण्यध' क. पाठः.

पारशवः। क्षत्रियस्य वैश्यायां माहिष्यः, शूद्रायां यवनः। वैश्यस्य शूद्रायां करणः। सर्वे ते प्रदर्शिता मातृपक्षधर्मविकल्पाः। तथा प्रतिलोमाः षडेते—सूतमागधचण्डालधीवरपुल्कसवैदेहकाः। तत्र ब्राह्मण्यां क्षत्रियाज्जातः सूतः, वैश्यान्मागधः, शूद्राच्चण्डालः। क्षत्रियायां वैश्याद् धीवरः, शूद्रात् पुल्कसः। वैश्यायां शूद्राद् वैदेहकः। षडेते धर्मबहिष्कृताः कर्मकरणोपजीविनः। तदुभयवर्गाणामितरेतरनिबन्धनः संकरवर्णो बहुविस्तरः।

तथा द्विजातीनां ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिभेदेनाश्रमाश्चत्वारः। ते पुनः प्रत्येकं चतुर्विधाः। तत्र सावित्रोपकुर्वाणप्राजापत्यनैष्ठिकाश्चत्वारो ब्रह्मचारिणः। गृहस्था वृत्तिभेदेनाग्निभेदेन वा चतुर्विधाः। तत्र वृत्तिभेदेनाश्वस्तनिकोञ्छवृत्तिशालीनयायावराः। तत्राग्निभेदेन पञ्चाग्निस्त्रेताग्निरेकाग्निः पाक्षिकाग्निश्चेति चतुर्विधाः। तथा वानप्रस्था वैखानसोदुम्बरबालखिल्यफेनपाश्चेति चतुर्विधाः। तथा संन्यासिनः कुटीचक[1]बहूदक[2]हंसपरमहंसभेदेन चतुर्विधाः।

तत्र सामान्यविशेषभेदेनाग्निगुरुपरिचर्यास्वाध्यायभिक्षाचरणादयो बहुविधा ब्रह्मचारिधर्माः। तद्वद् ऋतुगमनपाकयज्ञपञ्चयज्ञाष्टकाश्राद्धविशेषादयो गृहस्थधर्मा बहुविधाः। तत्र श्राद्धं नित्यनैमित्तिककाम्यनान्दीमुखपार्वणभेदेन पञ्चविधम्।

---

१ 'कत्रिदण्डि' क ग पाठ   २. 'कत्रिदण्डिह घ पाठ

तथा बाह्याभ्यन्तरभेदेन वानप्रस्थधर्मो द्विविधः । तत्र बाह्यो वन्यमूलफलादिभिरहरहरग्निहोत्रादिकर्मविशेषः । तथाभ्यन्तरस्तीव्रतपश्चर्यापूर्वको यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिलक्षणः । तथा सन्न्यासधर्मः सकलकर्मफलसंन्यासपूर्वको वेदान्तश्रवणमननिदिध्यासनलक्षणश्चेत्यादिः प्रदर्शितश्चतुराश्रमधर्मः ।

तथा तदुभयसंयोगाद् वर्णाश्रमधर्मः । तत्र ब्राह्मणब्रह्मचारिणो ब्राह्मणगृहस्था ब्राह्मणवानप्रस्था ब्राह्मणसंन्यासिनश्चेति षोडशविधो ब्राह्मणवर्णाश्रमः । क्षत्रियब्रह्मचारिणः क्षत्रियगृहस्थाः क्षत्रियवानप्रस्थाश्चेति द्वादशविधः क्षत्रियवर्णाश्रमः । वैश्यब्रह्मचारिणो वैश्यगृहस्थाश्चेत्यष्टविधो वैश्यवर्णाश्रमः । शूद्रगृहस्था वृत्तिभेदेन चतुर्विधाः । तस्माच्चत्वारिंशद्विधो वर्णाश्रमधर्मः । स तु 'ब्राह्मणब्रह्मचारी पलाशदण्डं गृह्णीयाद्' इत्यादिर्विस्तरतो द्रष्टव्यः ।

तथा सामान्यधर्मः सर्वेषां वर्णानामाश्रमाणामन्येषामपि साधारणत्वेन विहितः । स तु ब्रह्मचर्याहिंसोपवासक्षेत्रतीर्थगमनादिर्बहुविस्तरः ।

प्रायश्चित्तधर्मो दोषनिष्कृतिलक्षणः[2] । तत्र दोषप्राप्तिर्द्विविधा विहिताकरणप्रतिषिद्धकरणभेदेन । तत्र विहिताकरणं नित्यनैमित्तिककर्मलोपः । प्रतिषिद्धकरणं शास्त्रप्रतिषिद्धानुष्ठानम् । तद्धर्मो मरणान्तिककृच्छ्रसान्तपनचान्द्रायणप्राजापत्यव्रतहोमदानतीर्थगमनादिभेदेन बहुविस्तरः ।

---

१. 'म । तद्धर्मो व्रा' क. ख. ग पाठ. २. 'णः । दो' ख. ग. घ पाठ

गुणधर्मः; समानजातिभ्यः सर्वेभ्यो वृत्तविद्याविशेषैः स्वधर्माग्रयवर्तित्वं स्वगुणः। स तु सर्वेषां वर्णानामाश्रमाणामुपपद्यते। तत्र ब्राह्मणगुणधर्मश्चत्वारिंशत्संस्कारसंस्कृतः स्नातकः; क्षत्रियगुणधर्मः सार्वभौमो राजा, वैश्यगुणधर्मो वाणिज्यादिमर्यादास्थापकः पत्तनाधिपतिः, शूद्रगुणधर्मः परिपालनपरः सामन्तः। तथा ब्रह्मचारिगुणधर्मो बहुशाखाध्यायी नैष्ठिकः, गृहस्थगुणधर्मो वसन्तयाजी सर्वातिथ्यः, वानप्रस्थगुणधर्मस्तीव्रतापसो निराहारः, संन्यासगुणधर्मः स्वशास्त्रकारी परमहंसश्चेति प्रदर्शितो वर्णाश्रमोभयसामान्यप्रायश्चित्तगुणधर्मभेदेनायं षड्विधः स्मार्तधर्मः। तदेतत्सर्वप्रदर्शनपरायणं धर्मशास्त्रम्। तदष्टादशविधं मन्वादिमहर्षिभिर्मतिभेदेनापि प्रदर्शितम्। इति मीमांसान्यायपुराणधर्मशास्त्राणीह प्रदर्शितानि॥

इति प्रपञ्चहृदये चतुर्थमुपाङ्गप्रकरणं समाप्तम्।

## उपवेदप्रकरणम्।

अथेदानीमायुर्वेदादीनामपि चतुर्णामुपवेदानामर्थविशेषाः प्रदर्श्यन्ते। तत्र तावदायुर्वेदस्त्रिस्कन्धो हेतुलिङ्गौषधस्कन्धभेदेन। तत्र हेतुर्निदानं, रोगो[2] लिङ्गं, चिकित्साकरणमौषधम्। तत्र रोगनिदानं धातुदोषमलसमुदायशरीरम्। तद् द्विविधं स्थूलसूक्ष्मभेदेन। तत्र स्थूलशरीराश्रया वातपित्तकफाः। सूक्ष्मशरीरव्यापाः कामक्रोधलोभाः। तदुभयशरीरदूषणादुभयवर्गगताः षडेते दोषविशेषाः। तत्र दोषवैषम्यं रोगः, दोषसाम्यमारोग्यम्।

१. 'ति', २ 'रो' क. पाठ.

तत्र रोगकारणं त्रिविधं निमित्तोपादानसहकारिकारणभेदेन । तत्र निमित्तकारणं कर्म । तत् पूर्वकृतमिदानीं क्रियमाणं मिश्रं चेति त्रिविधम् । तदुपादानकारणमुभयविधदोषाः। सहकारिकारणं भक्ष्यभोज्यलेह्यपेयभेदेनायं चतुर्विधोऽन्नरसविशेषः । त्रिभिः कारणविशेषैरेभिर्जायमाना रोगाः शारीरा मानसाश्चेति द्विविधाः । तत्र शारीरा वातपित्तकफप्रभवा ज्वरकुष्ठशूलभगन्दरादयो रोगविशेषाः । मानसा रागद्वेषलोभमोहमदमात्सर्यशोकक्रोधतृष्णादय आधिविशेषाः । तत्र पुराकृतदोषाणां प्रायश्चित्तजपहोमदानादिकर्मविशेषैरुपशमः, इह क्रियमाणानामौषधविशेषैः, मिश्रप्रभवाणामुभयात्मकप्रयोगविशेषैः । तत्र मानसानामात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गादिपरिज्ञानादुपशमः । तथा शारीरविशेषाणामौषधविशेषैः । तदौषधं द्रव्यरसगुणवीर्यविपाकप्रभावभेदेन षड्विधम् । तत्र द्रव्यं पाञ्चभौतिकं पञ्चगुणाश्रयम् । तदपि पार्थिवमाप्यमाग्नेयं वायव्यं मिश्रमिति पञ्चविधं द्रव्यम् । तदाश्रया रसादयः पञ्च पदार्थाः । तत्र स्वाद्वम्ललवणतिक्तोष्णकषायभेदेन षड्विधो रसः । तत्संयोगजनिताः सप्तपञ्चाशन्मिश्ररसाः । तत्प्रभवा बहुविधाः सम्पद्यन्ते । तथा गुरुलघुमन्दतीक्ष्णहिमोष्णस्निग्धरूक्षश्लक्ष्णखरसान्द्राच्छ(?) मृदुकठिनस्थिरचलस्थूलसूक्ष्मविशदपिच्छिलभेदेन विंशतिविधो गुणः । [2]वीर्यं गुरुस्निग्धहिममृदुलघुरूक्षोष्णतीक्ष्णभेदेना[3]ष्टविधम् । तद् गुणवदुपलभ्य-

१. 'धात्' ख. ग. घ. पाठः. २. 'र्यमष्टविध गु', ३. 'न । त' क. पाठः.

ते, न तु गुणः । तथा विपाकस्त्रिविधः स्वाद्वम्लकटुकभेदेन ।
प्रभावः कार्यानुमेयः सर्वगतो विभुरेकः । तस्मादौषधविशेषो[१]
द्रव्यरसगुणवीर्यविपाकप्रभावाश्रयः[२] । तत्प्रयोगविशेषश्चिकित्सा-
करणम् । तदेतत्सर्वप्रदर्शनपरं[३] आयुर्वेदः । स तु ब्रह्मप्रजापती-
न्द्राात्रेयाग्निवेशादिभिरध्ययनाध्यापनपरम्परानुगतोऽग्निवेशादि-
भ्यः शास्त्रत्वमापन्नः । ततोऽग्निवेशादिभिर्बहुविधानि शास्त्राणि
सम्प्रणीतानि । तेभ्यश्चरकसुश्रुतवाहटादिभिरपि बहुविधानि
कृतानि । तत्र चरकमुनिना हेतुलिङ्गौषधस्कन्धार्थाः सर्वे विस्तरेण
प्रदर्शिताः । तथा सुश्रुतेनापि महता तन्त्रयुक्तिन्यायेन द्रव्या-
दयः षट् पदार्थाः प्रदर्शिताः । तथा वाहटेन

"कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषाः ।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ॥"

इति प्रतिज्ञाय,

"भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।
चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्विधम्[१०] ॥"

इत्याद्यष्टसहस्रैः[११]श्लोकैरारोग्यकरणं सम्यगेव प्रदर्शितमिति ।

तथा धनुर्वेदश्चतुष्पादः[१२] । तत्र प्रथमो दीक्षापादः, द्वितीयः
संग्रहपादः, तृतीयः सिद्धिपादः, चतुर्थः प्रयोगपादः । तत्र दी-

१. 'षा द्रव्या । द्र', २. 'या' ख. ग. घ. पाठः. ३. 'त्प्रद' ख. ग. पाठः. ४. 'रमिदमायुर्वेदं ब्रह्मा प्रजापतिमध्यापयामास, प्रजापतिरश्विनौ, ताविन्द्रम्, इन्द्र आत्रेयादीन् महर्षींस्तेऽग्निवेशादीन्, अग्निवेशादिभ्य.', ५. 'नम् ।', ६. 'तैरपि', ७. 'ष्पन्नानि', ८. 'सर्वमपि प्र', ९. 'तम् ।' क. पाठः. १०. 'र्गुणम्' क. ग. घ. पाठः. ११. 'स्रैः श्लो' ख. पाठः. १२. 'दः । धनु स' ख. ग. घ. पाठः.

क्षापादे धनुर्लक्षणमधिकारिविचारश्च क्रियते । तत्र धनुःशब्दश्चापे रूढो योगवृत्त्या चतुर्विधशस्त्रेषु[1] वर्तते । तदपि मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तं[2] चेति चतुर्विधम् । तत्र मुक्तं चक्रवज्रवलयशक्तितोमरकुन्तपाषाणादिकम् । अमुक्तमङ्कुशपाशक्षुरिकासिगदामुसलदण्डादिकम् । मुक्तामुक्तं[3] पाशवागुरारज्जुवलयादिकम् । यन्त्रमुक्तं चापशतघ्नीशल्यकमञ्जूषाकवर्णादिकमिति । तत्र सर्वशस्त्राणां प्रवरं धनुः । तदङ्गं बाणार्धचन्द्रशिलीमुखनाराचमोचकादिकमिति । तदन्येषामङ्गमपि यथासम्भवमुन्नेयम् । तथास्त्रमपि[6] मन्त्राक्षरप्रतिलोमपठितं साधिदैवतम् । तदपि प्रतिमन्त्रदैवभेदादनेकविधम् । ब्राह्मं प्राजापत्यं वैष्णवं शैवमैन्द्रं[10] वारुणमाग्नेयं वायव्यं सौम्यमादित्यं दौर्गं गाणेश्वरं स्कान्दं शाक्तेयं याक्षं राक्षसं नागं[11] गारुडं गान्धर्वं पैशाचं पैत्रं पार्थिवमाप्यं तैजसं पावनं[12] नाभसं सामुद्रं पार्वतं गायत्रं त्रैष्टुभमानुष्टुभमित्यादिबहुविधमस्त्रम्[13] । सर्वेषामिह प्रदर्शितानाम स्त्रशस्त्रविशेषाणामधिकारः क्षत्रियकुमाराणामन्येषां वा तदनुयायिनाम् । ते[14] च सर्वे चतुर्विधाः पदातिरथगजतुरगारूढाः ।

---

१. 'धायुधविशेषेषु' क. ङ पाठ. २ 'क्त चापादिकमिति चतुर्णां प्र' क. पाठः. ३. 'क्त कवणादि । यन्त्र' ङ पाठ. ४. 'पादिकम् । त' क. पाठ., ५. 'ना' क. पाठ.. ६ 'स्त्र मन्त्रा' क पाठ. ७ 'तू प्र' ख ग घ. पाठ. ८. 'न्त्रभे' क. पाठः ९. 'द् बहुवि' क पाठ. १०. 'व वा' ख ग घ पाठ. ११ 'ग गान्ध' ख ग. घ. पाठ १२. 'वामन' ख ग. पाठ. १३. 'धं मन्त्रम् ।' क. पाठ. १४. 'ते सर्वे चतुर्विधा रथगजतुरगारूढाः पदातय । ते' क. ख. पाठ

तेषां दीक्षाभिषेकशकुनमङ्गलकरणादिकं सर्वमपि प्रथमपादे प्रदर्शितम् । सङ्ग्रहपादे सर्वेषामस्त्रशस्त्राणां सङ्ग्रहः, सिद्धिपादे सङ्गृहीतानामस्त्राणां सर्वेषां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि दर्शितम् । तत्र मन्त्रमयी देवता सकला निष्कला च । सा पञ्चगुणा[2] । तद्गुणाश्चेतनावत्त्वमिच्छाविग्रहवत्त्वं यष्टव्यत्वं तुष्टिमत्त्वं फलदातृत्वं चेति । तदर्चनायामावाहनासनार्घ्यपाद्याचमनमधुपर्कस्नानवस्त्रोपवीत[3]गन्धपुष्पधूपदीपनैवेद्यप्रदक्षिणनमस्काराः षोडशोपचाराः । [4]तदर्चनया संसिद्धानामस्त्रशस्त्रविशेषाणां प्रयोगश्चतुर्थपादे प्रदर्शितः । सामदानभेदैरशक्यतरे पुरुषे चतुर्थेऽपि शरीरदण्डे प्राप्ते बहूनां ब्राह्मणानामात्मनो वानुग्रहायात्ययिके कार्ये देशकालावस्थाकर्तृकरणाद्यनुगुणमापदि प्रयोज्योऽस्त्रशस्त्रविशेषः । इत्येतत्सर्वप्रदर्शनपरायणो धनुर्वेदो ब्रह्मप्रजापतीन्द्रमनुजमदग्निसुतादिभिरध्ययनाध्यापनपरम्परानुगतो[5] विश्वामित्रा[6]दिभिरनन्तरं शास्त्रत्वमापन्नः ।

तथा गान्धर्ववेदो[7] लौकिकयोगप्रदर्शनपरायणः । तद्योगस्त्रिविधो गीतनृत्तवाद्यभेदेन । तत्र[8] सामवेदसंभवं गीतं[9]

१. 'करणम् ।' ख ग घ पाठ २ 'णाश्रया । तदपि सविदूपिणी स्वेच्छाविग्रहवती यष्टव्या तुष्टिमती फलदात्री चेति प्रदर्शिता मन्त्रदेवता । तद' क पाठ ३ 'तभूषणग' ख ग पाठ ४ 'तत्र जपार्चनया सिद्धमन्त्रस्याक्षरप्रतिलोमपादाभिमन्त्रितमस्त्रम् । प्रयोगपादे तदुभयवर्गाणामस्त्रशस्त्रविशेषाणां बहूनामनुग्रहाय चात्मनो वापत्सु प्रयोग । तदे 'तत्सर्वं' ख. पाठ . ५. 'तोऽपि वि' क पाठ ६. 'त्रजमदग्निप्रभृतिभि शा' क पाठ ७ 'द । तद्वेद्य गी' ख ग. घ पाठ ८ 'त्र गीत साम', ९. 'समुद्भवं, नृत्तं यजुर्वेदसमुद्भवं, वाद्यम् ऋग्वेदसमुद्भूतम् ।' क. पाठ .

यजुर्वेदसम्भवं नृत्तम्, ऋग्वेदसम्भवं वाद्यम्[1] । तत्र गानं[2] स्वरविशेषाभिव्यञ्जकम् । तदुदात्तादिभेदेन पूर्वमिह प्रदर्शितम् । तद[3]न्यदपि देशभाषा[4]निबन्धं बहु विस्तृतम्[5] ।

नृत्तमभिनयलक्षणम् । तदाङ्[6]गहार्यमाङ्गिकमान्तःकरणिकं वाचिकं चेति चतुर्विधम् । तदे[7]तच्चतुर्विधं नृत्तमुभयविधं केवलनृत्तं नाट्यं चेति । तत्र केवलनृत्तं प्रचार[8]समूहः । प्रचारोऽङ्गहार[9]समूहः । अङ्गहारः करण[10]समूहः । करणमङ्गप्रत्यङ्गविन्यासविशेषः । तस्मात्[11] करणाङ्गहारप्रचार[12]क्रियाविशेषात्मकं केवलनृत्तम्[13] । तथा नाट्यनृत्तं[14] नटनलक्षणम् । तदेतदष्टभावानां नवरसानामाश्रयभूतम् । ते च प्रदर्शिताः—

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चै[15]वेत्यष्टौ भावाः प्रकीर्तिताः ॥
शृङ्गारहास्यकरुणा[16] वीररौद्रभयानकाः ।
बीभत्साद्भुतशान्ताश्च नवै[17] नाट्यरसाः स्मृताः ॥"

इति । तत्रा[18]ष्टौ भावाः पूर्वरूपाः । तदुत्तररूपा नवरसाः । नटनं भावविशेषः । तद्भावनया नाट्यरसो जायते । तत्र रतिभावे[19]-

---

१. 'म् । एते त्रयो वेदास्त्रयो देवास्तदन्ये च शब्दब्रह्मसमुद्भवाः । तस्मादुभयवर्गयोरेकजातीयत्वाद् वेद्यवेदकत्व, यजनयष्टव्यत्व स्तुतिस्तुत्यत्वमिति । त' ख. ग. घ. पाठ:. २. 'नमुदात्तानुदत्तस्वरितविशेषात् सप्तस्वरप्रभवेरवान्तरविशेषैश्चतुर्दशसहस्रविधमिति पूर्वं', ३. 'दाश्रय दे', ४ 'पादिनि', ५ 'स्तर लौकिकगानम् । तथा नृ', ६. 'ङ्गिकम् आहार्यमान्तः' क. पाठः. ७. 'त्पुनर्द्विविध केवलनाट्यभेदेन ।' क पाठ. ८. ९. १०. 'कलापः । 'क', ११. 'दनेकक' क. पाठ.. १२. 'रात्मक' क. पाठः. १३. 'म् । ना' क. पाठः. १४. 'त्त चतुर्वर्गफलायत्त चतुरोदात्तनायकम् । तदेवाष्टभावनवरसाश्रयम् । भावाः पूर्वरूपाः । रसास्तदुत्तररूपा. । तत्र र' क पाठ. १५. 'व तेऽष्टौ' क. पाठः. १६. 'णरौद्रवीरभ' क. पाठः. १७. 'ट' क. पाठ. १८. 'त्र रति', १९. 'वः शृ' क. पाठ.

नया शृङ्गाररसो[1] जायते, हासभावनया[2] हास्यरसः । शोकभावे[3]·नया करुणरसः । क्रोधभावनया[4] रौद्ररसः । उत्साहभावनया[5] वीररसः । भयभावनया[6] भयानकरसः । जुगुप्साभावनया[7] बीभत्सरसः । विस्मयभावनयाद्भुतरसः[8] [9] । तदष्टभावानामभावो नवम इति केचिदाहुः । तदसमञ्जसम् । नाट्यशास्त्रे नवरसानामभ्युपगमात् । अतः सर्वेन्द्रियोपरमलक्षणः शान्तो नवमरसः । ते भावा नव रसाश्च लोके प्रसिद्धतरा नाट्यस्य नटनकाले नटमुखादवगन्तुं शक्यन्ते । भावरसयोर्नाल्पतरमन्तरम् । विदुषां भावे भावान्तरं रसे रसान्तरमपि किलेष्यते[10] । भावनं भावः क्रियाविशेषः । रस्यते सज्ज्यते रसः । तावुभौ परस्परसम्बद्धौ । नर्तकप्रेक्षकयोरिव नामजातिगुणक्रियाद्रव्य[11]भावोऽपि (वि?)भावरसाश्रयः । प्रदर्शितमुभयविधं नृत्तम् ।

तथा वाद्यं घनं ततमवनद्धं सुषिरं चेति चतुर्विधम् । तत्र घनं तालकृतम् । तदपि दक्षिणोत्तरबाहुविशेषाच्चपुटं चापुटं चेति द्विविधम्[12] । तदुभयं द्रुतमध्यविलम्बितभेदेन प्रत्येकं त्रिविधम् । ततं तन्त्रीवीणादिजनितम् । अवनद्धं मुरजभेरीपटहादिजनितम्[13] । सुषिरं वेणुकाहलशङ्खादिजनितमिति प्रदर्शितं गीतवाद्यनृत्तत्रयम्[14] ।

---

१. 'स', हा', २. 'वो हा', ३. 'वः क', ४. 'वो रौ', ५. 'वो वी', ६. 'वो भ', ७ 'वो वी', ८. 'वोऽद्भु', ९. 'सः । सर्वेन्द्रियान्तःकरणोपशमलक्षणः शान्तरसः । भावे', १०. 'ते । भावस्य रसव्यतिरिक्त पुरुपदेशकालावस्थाद्रव्यजा', क. पाठः. ११. 'दिविशेषप्रदर्शनमिति प्र' क. पाठः. १२. 'म् । तत' ख ग. घ. पाठः. १३. 'म् । तदुभय द्रुतमध्यविलम्बितभेदेन प्रत्येक त्रिविधमिति' ख. ग. घ. पाठः. १४. 'म् । प्रयो' ख. ग. घ. पाठः.

तत्प्रयोगश्चतुर्विधः । त्रयाणामेकैकं प्रधानीकृत्यान्याभ्यां द्वाभ्यामङ्गभूताभ्यां त्रयः प्रयोगविशेषाः । सर्वेषां[2] समप्रयोगश्चतुर्थः । स तु प्रयोगविशेषैः[3] सप्ताङ्गकः । तत्र सभा सभापतिः सभ्य उपाध्यायो गायिका[4] वादको नर्तक इति सप्तविधं प्रयोगाङ्गम् । तत्र सभा राजगृहे देवगृहे ग्राममध्ये वा लक्षणलक्षिता प्रतिष्ठितदेवता कृतकौतुका । सभापतिरीश्वरो देवो वा सर्वज्ञः सर्वजनप्रियः । सभ्याः सभायोग्यास्तत्प्रयोगज्ञा धनिनो युवानः कृतकृत्याः । उपाध्यायः सर्वज्ञः सर्वजनप्रियः कथासंवेदकः । गायिका गानविशारदा ललिता विशदाक्षरा सपरिवारा सुवेषा सुस्वरा च। वादको वाद्यविशारदो लघुहस्तः प्रयोगज्ञः सपरिवारः । नर्तकः शिक्षितकायः समशरीरः सर्वज्ञः सर्वजनप्रियः प्रयोगज्ञः सुस्वरवेषश्चेति प्रदर्शितं[6] प्रयोगाङ्गमित्येतत्सर्वप्रदर्शनपरो गान्धर्ववेदः ।

तत्प्रयोगविस्तारार्थी ब्रह्मा जगदादौ सुतांस्तदर्हान् भरतशाण्डिल्यवत्सकोहलधूर्तिलजटिलाम्बष्ठकण्वाग्निशिखधूम्रायणकपिञ्जलदीर्घगोत्रगार्ग्यपीठमुखादीनध्यापयामास । ते पुनः सर्वे प्रत्येकं गान्धर्ववेदप्रकरणानि कृतवन्तः । तत्र केचिद् गीतशास्त्राणि, केचिद् नृत्तशास्त्राणि, केचिद् वाद्यशास्त्राणि, केचित् सर्वसमुच्चयानीति प्रदर्शितो गान्धर्ववेदः ।

तथा अर्थवेदोऽर्थस्य योगक्षेमप्रदर्शनपरायणः । स तु स्वभार्यापुत्रमित्रदासीदासगजतुरगगोमहिषगृहक्षेत्रशयनासनधनधान्यादिभेदेन पूर्वमिह प्रदर्शितः । तत्र योगक्षेमविधाननय-

१. 'भ्याम' ङ पाठ २. 'सम्प्रयो', ३ 'पस्तावदय स' क. पाठ. ४, ५. 'यकी वा', ६. 'तमिह प्र' ङ. पाठ.

नादर्थवेदो नीतिशास्त्रम् । तत्राविद्यमानापादनं योगः, विद्यमानपरिरक्षणं क्षेमः । विद्यमानाविद्यमानशब्दाभ्यामभिहितो धर्मशास्त्रविहितः स्वस्वामिसम्बन्धः । स द्विविधो जन्मना कर्मणा च । तत्र जन्मना पैतृकद्रव्यसम्बन्धः । कर्मणा स्वार्जनद्रव्यसम्बन्धः । चतुर्णामपि वर्णानामर्थार्जनकर्म त्रिविधम् । ब्राह्मणानामध्यापनयाजनप्रतिग्रहैः, क्षत्रियाणां परिपालनयुद्धपरराष्ट्रनिवेशनैः, वैश्यानां कृषिगोरक्षावाणिज्यैः, शूद्राणां ब्राह्मणक्षत्रियवैश्यशुश्रूषणैः । अनुलोमानां मातृपक्षकर्मविशेषैरिति पूर्वमेव प्रदर्शितम् । तदन्येषां प्रतिलोमानामहरहर्नीचकर्मकरणैरहरहर्नयनमात्रम्, अर्थसञ्चयो न विहितः । तदुभयविधद्रव्यार्थमीश्वरमधिगच्छेत् । तदुक्तम्—

"उपेयादीश्वरं चैव योगक्षेमार्थमेव च"

इति । स राजा सप्तप्रकृतिः—

"स्वाम्यमात्यौ जनपदो दुर्गद्रविणसञ्चयौ ।
दण्डं मित्रं च सप्तैते राज्ञां प्रकृतयो मताः ॥"

इति । तस्यास्य चान्यस्य चार्थस्य योगक्षेमौ समानौ । तदर्थस्य पुरुषस्य च साधका बाधका उपेक्षका इति त्रिविधाः पुरुषा लोके । तत्र बाधकेषूपद्रवकारिषु चतुरुपायाः प्रदर्शिताः । ते सामभेददानदण्डाः क्रमेणैव प्रयोक्तव्याः । प्रबलेषु सन्धिविग्रहयानासनद्वैधीभावसंश्रयाः षडुपायाः । दुर्बलानां वशीकरणमपि प्रदर्शितम्—

---

१ 'क्स' क पाठ २ 'क्म' क, 'नस' ङ पाठ ३ 'स्याम्य' क. पाठ ४ पा । त' ख. ग घ पाठ ५ 'या । ते चापि पृथक् पृथग् बहुविधा । दुर्बलेषु गमेषु चतुरुपप्रयोगा । तेऽपि उक्त' क पाठ

"उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रसादेन समं तुल्यपराक्रमैः ॥
लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा ।
मूर्खं छन्दानुवृत्त्या[1] च[2] याथातथ्येन पण्डितम् ॥"

इति । सर्वानर्थयोगक्षेमायात्मवशं नयेदिति[3] वाक्यशेषः । तत्र[4] स्वकीयं द्रव्यं चतुर्धा विभज्य चतुर्णां पुरुषार्थानां परिकल्पनीयम् । तत्र कामार्थभागेनारोग्यकरणशयनासनप्रीतिदानादिकं क्रियते[5] । अर्थार्थभागेन काम्यकर्मक्षेत्रकरणाभिवृद्धिराजसेवादिकं, धर्मार्थभागेनाध्ययनयागदानादिपूर्वकं वर्णाश्रमविहितं नित्यनैमित्तिकं, मोक्षार्थभागेनान्तःकरणशुद्धिकारणं वेदान्तश्रवणमननिदिध्यासनपूर्वकमीश्वरार्पणम् । तत्र मोक्षपरः पुरुषः सर्वं तत्रैव नियोजयति, धर्मपरो धर्मे, अर्थपरोऽर्थे, कामपरः कामे[6], समुच्चयपरः समुच्चये । तदेतत्सर्वप्रदर्शनपराय[7]णोऽर्थवेदः । सोऽयमध्ययनाध्यापनपरम्परानुगतो ब्रह्मप्रजापतीन्द्रमनुकुबेरादिभिरनन्तरं शुक्रबृहस्पतिप्रमुखैः शास्त्रत्वमापन्न इत्यायुर्वेदधनुर्वेदगान्धर्ववेदार्थवेदाश्चत्वार उपवेदाः प्रदर्शिताः संक्षेपेणेति ॥

इति प्रपञ्चहृदये उपवेदप्रकरणं नाम पञ्चमं

समाप्तम् ।

---

१. 'सारेण या' ङ. पाठः. २. 'तु' ख, 'वा' घ., ३. 'ति । त' ग. पाठः. ४. 'त्र द्र' ग., 'द्रव्य' ख. घ. पाठः. ५. 'ते । द्रव्याच्चतुर्थं' क., 'ते द्रव्यार्थं', ६. 'मे । शेषी पुरुषः । त' ख. पाठः. ७. 'रोऽर्थं' क. तदधिकारवशात् पुरुषस्य पुरुषार्थशेषोऽर्थः । पाठः.

## अथ षड्वर्गप्रकरणम् ।

अथेदानीमशेषपुरुषार्थाग्र्यः सकलसंसारदुःखप्रवाहनिवर्तको मोक्षोऽपीह प्रदर्श्यते। स तु बृ[1]हस्पत्यार्हतबुद्धाक्षपादकणादकपिलजैमिनिबादरायणानां मत[2]भेदेनाष्टविधः[3]। तत्र लोकायतश्चतुर्विधपरमाणूनां तत्त्वान्तरै[4]र्निरपेक्षं पूर्वकर्म[5]ज्ञानवासनया सृष्टिप्रलयावङ्गीकरोति । तत्र पार्थिवा आप्या आग्नेया वायव्याश्चेति चतुर्विधाः परमाणवः । ते सृष्टिमुखे तनुभुवनाकारेण सहसा संहन्यन्ते । तत्र भुवनं परिदृश्यमानम् । कार्यविशेषा भूर्लोकतनवो मनुष्यपशुमृगपक्षिसरीसृपस्थावरविशेषाः षड्विधाः । तदवान्तरजातिविशेषः शतसहस्रविधः । सर्वेषां शरीरजातिविशेषाणां जन्यजनकभावेन बीजाङ्कुरभावेन सर्वशरीरसन्ततिप्रवाहः । तत्र शरीरविशेषै[6]श्चतुर्विधपरमाणुलक्षण(न?) भूतस[7]मवायात् । अन्नाहरण(त्व?)क्रमेण चैतन्याविर्भावः । तत्र सर्वभूतानां मनुष्यशरीरं श्रेष्ठं, ज्ञानाधिक्याच्चतुर्विधपुरुषार्थसाधकत्वाच्च । तत्र कामार्थधर्ममोक्षभेदेन चतुर्विधः पुरुषार्थः । तत्रेष्टेन्द्रियानुभवः कामः[8] । तत्साधनभूतोऽर्थः । तत्प्राप्तिहेतुर्धर्मः । सकलसंसारनिवृत्तिलक्षणो मोक्षः ।

तत्र प्रत्यक्षं प्रमाणम् । शारीरैर्भौतिकेन्द्रियैरर्थनिर्णयः

---

१ 'वार्हस्प' ख पाठ २ 'ति' ख ग. पाठ ३ 'ध । प' ग. घ पाट ४ 'र नि' ख पाठ ५ 'कवी' ग पाट॰ ६. 'पचतु' ख. पाठ ७ 'समुदाया' घ पाठ ८. 'म । तत्र घ पाठ

प्रत्यक्षम् । तत्पूर्वकेण लोकायतशास्त्रश्रवणेन तुच्छलक्षणो भूतपञ्चमो मोक्षो भवतीति लोकायतमतम् ।

तथार्हतश्चतुर्भूतपरमाणुकार्यस्य तनुभुवनात्मप्रपञ्चस्य सृष्टिप्रलयावङ्गीकरोति । तत्राकाशो द्विविधो लोकालोकाख्यभेदेन । तत्र लोकाकाशे त्रिविधाः पुरुषाः सिद्धा बद्धा नारकीया इति । तत्र नारकीयाः सर्वे पापफलभोक्तारो नरकवासिनः । सिद्धास्ते त्रिविधाः मन्त्रसिद्धा औषधसिद्धाः परमसिद्धाश्च । बद्धाः सप्तविधाः सुरनरपशुमृगपक्षिसरीसृपस्थावरभेदेन । आत्मनो बन्धकारणमष्टविधं तुङ्भावनातृष्णोपादानभवजातिजरामरणभेदेन । तदाश्रयभूता आत्मानः सर्वे परमा(णु?न)परिमिता नित्या विज्ञानलक्षणाः । तदात्मना देशकालकर्मसंस्कारभोगानुगुणं चतुर्विधपरमाणुभिः सुरनरपशुमृगपक्षिसरीसृपस्थावरशरीरारम्भः । तत्रात्मनोऽर्थग्रहणाय निर्गमनद्वाराणीन्द्रियाणि । सर्वेषां सिद्धबद्धमुक्तानामपि समानम् । तत्र बद्धस्य संसारविरक्तस्य मोक्षो ज्ञानकर्मसमुच्चयादलोकाकाशप्राप्तिलक्षणो मूषानिषिक्तद्रुतताम्रदेहवद् दिव्यशरीरो देहावसाने । तत्र प्रमाणं त्रिविधं प्रत्यक्षानुमानागमभेदेन । तत्रेन्द्रियद्वारेणात्मनोऽर्थविज्ञानं प्रत्यक्षम् । तत्पूर्वकलिङ्गाल्लिङ्गिनि ज्ञानमनुमानम् । आर्हतशास्त्रमागमः । केशोल्लु(ण्ठ?ञ्च)नपाणिपात्रमौनवीरासनतप्तशिलारोहणादिकं मोक्षसाधनं कर्मेति प्रदर्शितमार्हतमतम् ।

तथा बुद्धितत्त्वे व्यवस्थितो बौद्धः । तद्वृत्तिर्द्विविधा ज्ञानाज्ञानभेदेन । तत्र मूलाज्ञानवृत्तिप्रभवः स्कन्धायतनक-

त्पनाविषयस्तनुभुवनात्मकः प्रपञ्चः । तत्र मूलाज्ञानवासनानिबन्धनः संस्कारस्कन्धः । तन्निबन्धनो[2] वेदनास्कन्धः । तन्निबन्धनो विज्ञानस्कन्धः । तन्निबन्धनो रूपस्कन्धः । तत्र द्वादशायतनम् । श्रोत्रत्वगक्षिजि घ्राणानि प्रत्ययपञ्चकम् । वाक्पाणिपादपायूपस्थास्ते कारकपञ्चकम् । मन इत्येकं करणम् । बुद्धिरिति सामुदायिकचैतन्यम् । तद्देहकलापः[3] सर्वोऽपीदृशः । तदाश्रयं नामजातिगुणक्रियाद्रव्यभेदेन पञ्चविधं कल्पनामतं तनुभुवनम् । तदुभयात्मकं बौद्धशास्त्रप्रमेयम् । तत्प्रमाणं द्विविधं प्रत्यक्षानुमानभेदेन । तत्र प्रथममक्षसन्निपातजनितं ज्ञानं प्रत्यक्षम् । लिङ्गदर्शनाल्लिङ्गि[4]ज्ञानमनुमानम् । तदुभयप्रमाणप्रमेयव्यवहरणचतुर्विधज्ञाननिवृत्तिस्तन्निवृत्तिमूलाज्ञानम् । (?) तत्कार्ये शुद्धबुद्धिरवशिष्यते । सा मुक्तस्य मुक्तिरित्यभिहिता । तदेव प्रतिज्ञातं बुद्धमुनिना—

"उत्पादस्थितिभङ्गदोषरहितां सर्वागमोन्मूलिनीं
ग्राहोत्सर्गवियोगयोगजनितां नाभावभावान्विताम् ।
तामन्तर्द्वयवर्जितां निरुपमामाकाशवन्निर्मलां
प्रज्ञापारमितां जनस्य जननीं शृण्वन्तु बौ[5]ध्यर्थिनः ॥"

इति । प्र[6]ज्ञापारमिता शुद्ध[7]बुद्धिरशेष[8]संसारदुःखनिवारणीति प्रदर्शितं बौद्धमतम् ।

---

१. 'त्मप्र' ख. ग. पाठः. २ 'नो रू' ख. ग. पाठः. ३. 'काका: स' ग., 'कालावयवः स' ख. पाठः. ४. 'ङ्गिनि ज्ञा' ग. पाठः. ५. 'बौ' घ. पाठः. ६. 'प्रतिज्ञा' ग. पाठः. ७. 'द्धि' ख. पाठः. ८. 'पदुः' ग. पाठः.

तथाक्षपादोऽपि तनुभुवना[1]त्मकप्रपञ्चस्य सृष्टिप्रलयावङ्गीकरोति । तत्र सृष्टिमुखे सगुणा आत्मानः सर्वे सर्वगता नित्या निरवयवा जडाश्चतुर्विधाः । परमाणुकालाकाशदिगादयोऽपि जडाः । सर्वे ते कारणविशेषाः । परमेश्वरो निमित्तकारणम् । स तु सर्वज्ञः सर्वगतः सर्वशक्तिः । तदिच्छया सर्वेषामात्मनां चतुर्विधपरमाणुभि[2]र्देश(कर्म?)कालकर्मसंस्कारभोगानुगुणं सुरनरपशुमृगपक्षिसरीसृपस्थावरा उत्पद्यन्ते विपद्यन्ते च । तत्र भौतिकेन्द्रियाणां विषयसंयोगे सत्यात्मनः संयोगादर्थविज्ञानं ज्ञानम् । अज्ञानं तदभावः । तदेव मिथ्याज्ञानम् । तदुभ(या ? यमा)त्मगुणः । तत्रात्मनो मिथ्याज्ञाना(गत?द्) द्वेषलोभमोहादिदोषविशेषः प्रवर्तते । दोषो मनोवाक्का[3]यप्रवृत्तिः । प्रवृत्तेः सुरनरतिर्यग्जननम् । जननाद् दुःखत्रयानुभवः । तन्निवृ[4]त्तिः स्वकारणनिवृत्तिक्रमेण विज्ञेया । मिथ्याज्ञाननिवृत्तिः षोडशपदार्थपरिज्ञानात् । ते पदार्थाः प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तासिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानभेदेन पूर्वमिह प्रदर्शिताः । तत्र प्रमाणं चतुर्विधम् । प्रमेयं द्वादशविधम् । तत्रेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम् । तत्पूर्वलिङ्गाल्लिङ्गिज्ञानमनुमानम् । तेनेदं सदृशं तदने[5]नं वोपमानम् । आप्तवचनमागमः । तदिच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मलिङ्गम् । चेष्टेन्द्रियार्थाश्रयः शरीरम् । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानीन्द्रियाणि । शब्दस्पर्शरूपरसगन्धास्तदर्थाः । बुद्धि-

१. 'त्मप्र' ख. ग. पाठः. २. 'दिग्देश' ग. पाठः. ३. 'यद्' ख. पाठः, ४. 'त्तिपर्यन्ता । तन्निवृत्तिः षो' ख. ग. पाठः ५. 'नोपमानेनाप्त' घ. पाठः.

ज्ञानम्। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्। मनोवाक्कायप्रवृत्तिः प्रवर्तनालक्षणो दोषः। पुनरुत्पत्तिः प्रेत्यभावः। प्रवृत्तिजनितोऽर्थः फलम् । बाधनालक्षणं दुःखम् । तदत्यन्तविमोक्षोऽपवर्गः। इति प्रमाणचतुष्टयं प्रमेयद्वादशकं चेति षोडश पदार्थाः। तदुभयवर्गपरिज्ञानादात्यन्तिकदुःखनिवृत्तिलक्षणा केवलात्ममोक्षो भवतीति नैयायिकमतम् ।

तथासमानतन्त्रो वैशेषिकः सर्वमिदमङ्गीकरोति। मोक्षपदार्थपरिज्ञाने मतभेदः। तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुरिति । तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि। शब्दस्पर्शरूपरसगन्धसंयोगविभागसङ्ख्यापरिमाणपरत्वापरत्वपृथक्त्वगुरुत्वद्रवत्ववेगबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः । कर्म पञ्चविधम् उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदेन। सामान्यं द्विविधं[2] परमपरं च। परं सत्तासामान्यम्। अपरं मनुष्यत्वपशुत्वादिकम्। विशेषो व्यक्तिविशेषगतोऽनन्तः । समवायः सर्वत्राधाराधेयभूतयोः पृथक्सिद्धयोरपृथग्भूतसम्बन्धः। षडेते वैशेषिकपदार्थाः । तेषां साधर्म्यं समानधर्मत्वम्। वैधर्म्यं विषमधर्मत्वम्। तदुभयज्ञानं शास्त्रप्रमेयं मोक्षहेतुः। तत्प्रमाणं त्रिविधं प्रत्यक्षानुमानागमभेदेन । तत्रात्ममनइन्द्रियार्थसंयोगक्रमजनितं ज्ञानं प्रत्यक्षम् ।

---

१ 'ति' क. ग पाठ. २. 'दि। वि' घ पाठ.

लिङ्गदर्शनाल्लिङ्गिनि ज्ञानमनुमानम् । आप्तप्रणीतमागमः । तस्मादेतत्प्रमाणप्रमेयपूर्वकेण वैशेषिकशास्त्रश्रवणज्ञानेनात्यन्तिकदुःखनिवृत्तिलक्षणः पाषाणसदृशो मोक्षो भवतीति वैशेषिकमतम् ।

तथा कपिलोऽपि तनुभुवनात्मकप्रपञ्चस्य सृष्टिप्रलयावङ्गीकरोति । तत्रात्मानो बहवः । सर्वे सर्वगता नित्या निरवयवा विज्ञानलक्षणाः सर्वकर्मसाक्षिणः । प्रकृतिरेका त्रिगुणा परमार्थस्वरूपिणी नित्या निरवयवा जडा । सा सकलजगदाकारेण परिणमते । तत्र प्रकृतेर्महांस्तथाविधो बुद्धिलक्षणो जायते । ततोऽहङ्कारः । सोऽयं त्रिविधः सात्त्विकराजसतामसभेदेन । तत्र राजसाहङ्कारादुभयात्मकं मन इन्द्रियान्तःकरणभेदेन । ततो मनोहङ्कारबुद्धिभेदेनान्तःकरणं त्रिविधम् । सात्त्विकाहङ्कारादिन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि शब्दस्पर्शरूपरसगन्धपरिज्ञानाय । वाक्पाणिपादपायूपस्थौ[1] वचनादानगतिविसर्गानन्दकरणाय । तामसाहङ्काराच्छब्दतन्मात्रम् । ततः शब्दलक्षण आकाशः । ततः स्पर्शतन्मात्रम् । ततः स्पर्शलक्षणो वायुः । ततो रूपतन्मात्रम् । ततो रूपलक्षणं तेजः । ततो रसतन्मात्रम् । ततो रसलक्षणमुदकम् । ततो गन्धतन्मात्रम् । ततो गन्धलक्षणा पृथिवी चेति पञ्च महाभूतानि शब्दस्पर्शरूपरसगन्धगुणोत्तराण्याकाशवायुतेजोजलपृथिवीनामधेयानि त्रिविधानि सूक्ष्माणि शरीरारम्भकाणि प्रभूतानीति । तत्र सूक्ष्मभूतेन्द्रियान्तःकरणविरचिताः सूक्ष्मशरीरविशेषा जीवाः । शरीरारम्भकभूतविशेषैर्विरचिताश्चतुर्दश लोकाः । तत्र सृष्टिस्थिति-

१. 'स्थाश्च व' घ. पाठः.

संहारप्रवाहप्रवर्तको भावविशेषः। स चतुर्विधः प्रधानमहत्कारणकार्याश्रयभेदेन। तत्र प्रधानाश्रितोऽष्टविधः अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वमिति। तथा[2] महदाश्रितो धर्माधर्मज्ञानाज्ञानवैराग्यरागस्वतन्त्रपरतन्त्रभावभेदेनाष्टविधः। कारणाश्रितो भावो द्वादशविधो ज्ञानकर्मेन्द्रियमनोहङ्कारवृत्तिभेदेन[1]। कार्याश्रितो भावः षड्विधः अस्ति जायते विवर्धते विपरिणमतेऽपक्षीयते विनश्यतीति। एतैर्मूलभूतैस्तद्विकारैरपि सञ्चरिष्णवो जीवविशेषाः। तद्वासनानिबन्धनः सर्वेषामात्मनां संसारप्रतिभासो न परमार्थः। तद्वियोगः केवलात्मभावो मोक्षः। स तु प्रकृतिपुरुषविवेकज्ञानादात्यन्तिकदुःखनिवृत्तिलक्षणः। कैवल्यस[3]मानुभवो मोक्षः। तत्प्रमाणं त्रिविधं प्रत्यक्षानुमानागमभेदेन। तत्र श्रोत्रादिभिः शब्दस्पर्शरूपरसगन्धाध्यवसायः प्रत्यक्षः। तत्पूर्वकमनुमानं त्रिविधं कार्यदर्शनात् कारणानुमानं, कारणदर्शनात् कार्यानुमानम्, अविनाभूतलिङ्गदर्शनात् सामान्यतोदृष्टानुमानम्। आप्तवचनमागमः। तस्मादेतत्प्रदर्शितप्रमाण[4]प्रमेयव्यवहारेण प्रकृतिपुरुषविवेकज्ञानेनात्मनः केवलभावो मोक्षो भवतीति कपिलमतम्।

तनुभुवनात्मप्रपञ्चमनादिकालप्रवृत्तमेवाभ्युपगम्य चत्वारिंशत्संस्कारसंस्कृतस्य मुमुक्षोर्नित्यनैमित्तिककर्मणा कर्मक्षयलक्षणो मोक्षो भवतीति जैमिनिः। गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणान्नप्राशनचौलोपनयनचतुर्वेदव्रतस्नानविवा—

१ 'श्य' ख घ पाठ २ 'त्र' ख पाठ. ३ 'भावस्वात्तु', ४ 'णपूर्वण प्र ख ग पाठ

हपञ्चयज्ञसप्तपाकयज्ञसप्तहविर्यज्ञसप्तसोमसंस्थाश्चत्वारिंशत् संस्काराः । तत्र काम्यकर्माकरणाद् देवपितृयज्ञराक्षसनागगन्धर्वभूतपिशाचमनुष्यशरीरानिवृत्तिः । प्रतिषिद्धवर्जनात् पशुमृगपक्षिसरीसृपस्थावरशरीराभावः । ततः परिशेषाद् नित्यनैमित्तिकतया वर्णाश्रमतया विहितैः श्रुतिस्मृतिचोदितैः कामसङ्कल्पवर्जितैर्नरकादिप्रत्यवायपरिहारपूर्वकादशेषकर्मक्षयादात्मनः केवलभावो मोक्षो भवतीति । तत्प्रमाणं लौकिकप्रमाणपूर्वकं वेदवाक्यम् । तत्र लौकिकप्रमाणं षड्विधं प्रत्यक्षानुमानोपमानार्थापत्त्यागमाभावभेदेन । तत्र पुरुषस्येन्द्रियार्थसंयोगजनितं ज्ञानं प्रत्यक्षम् । लिङ्गिनि ज्ञानमनुमानम् । तद् एतत्सदृशेतरमुपमानम्[1] । तेन विना यदनुपपद्यमानं तदर्थापत्तिः । शब्दजनितं ज्ञानमागमः । इन्द्रियैरनुपलभ्यमानो नास्तिबुद्धिविषयोऽभावः । प्रमाणान्तरविषयातीतविशिष्टार्थावबोधकं वेदवचनम् । षट्प्रमाणपूर्वकतदनुष्ठानद्वारेणात्मनः केवलभावो मोक्षो भवतीति जैमिनिमतम् ।

तथा बादरायणो भगवान् व्यासस्तनुभुवनात्मप्रपञ्चप्रतिभासमज्ञानमात्रविजृम्भितमित्यभ्युपगम्य तदद्वैतब्रह्मपरिज्ञानादात्मनः सकलसंसारदुःखनिवृत्तिलक्षणब्रह्मभावो मोक्षो भवतीत्युपदिशति । तत्र सदसद्रूपाभ्यामनिर्वचनीयं मायामात्रम् । निर्गुणब्रह्ममात्रं वाङ्मनसागोचरं चैतन्यमात्रं शिष्टम् । तदुभयोरितरेतराध्यासादेकमेव मायाशबलब्रह्मरूपम् । तदुभयात्मकमन्तर्बहिर्विभागेन द्विविधम् । तत्राभ्यन्तररूपमन्तःकरणसंज्ञम् ।

१. 'तदेद तेनेद सद' ख. पाठः. २. 'शान्तर' घ. पाठः.

† उपमानम् इत्यतः प्राग् इतिशब्दोऽपेक्षितो भाति ।

तदेतदे(को ? कं) मनोबुद्ध्यहङ्कारचित्तवृत्तिविशेषेण चतुर्विधम्। तदवच्छिन्नचैतन्यं जीवः। तदवच्छेदकादानन्दमयः कोशो जायते, ततो विज्ञानमयः,(ततो मनोमयः) ततः प्राणमयः, ततोऽन्नमय इति क्रमेणायं पाञ्चकौशिको जीवः। ब्रह्मादिस्तम्बपर्यन्तशरीरेन्द्रियान्तःकरणाश्रयतद्बाह्यरूपावच्छिन्नचैतन्यं परमेश्वरलक्षणं ब्रह्म। तदवच्छेदाच्छब्दस्पर्शरूपरसगन्धगुणोत्तराण्याकाशवायुतेजोजलपृथिवीनामधेयानि पञ्च महाभूतानि। तेभ्यश्चतुर्दश लोका ब्रह्मादिस्तम्बपर्यन्तशरीरविशेषा जायन्ते। तस्मात् पाञ्चभौतिकाश्रयं ब्रह्म। ततो देवपितृयक्षराक्षसनागगन्धर्वभूतपिशाचमनुष्यपशुपक्षिसरीसृपस्थावरविशेषाः सञ्जायन्ते। सर्वेषां स्थितिमूलप्रदर्शनाय पुरुषाणां पुरुषार्थप्रदर्शनाय च चत्वारो वेदाः षडङ्गमीमांसान्यायपुराणधर्मशास्त्रायुर्वेदधनुर्वेदगान्धर्वनीतिप्रभृतयो जायन्ते। तत्र स्थावरेषु यज्ञोपभोगार्थमोषधयः सप्त ग्राम्याः सप्तारण्याश्च प्रविभक्ताः। ते व्रीहियवप्रियङ्गुगोधूमाणुतिलमाषा ग्राम्याः। नीवारश्यामाकजर्तिलगवीधुक(गवामतवास्तुवेणुयवा ? गार्मुतमर्कटकवेणव) आरण्याः। तत्र सप्त पाकयज्ञाः सप्त हविर्यज्ञाः सप्त सोमसंस्थाश्चेति प्रदर्शित एकविंशतिविधो यज्ञः। तद्यजमाना द्विजातयो गृहस्थाः तत्र कर्मकाण्डविहितैर्नित्यनैमित्तिककर्मविशेषैरिह प्रदर्शितैरन्यैर्वा ब्रह्मार्पणबुद्ध्या क्रियमाणैः (गृहस्थान्यस्योपाध्याय?)श्रवणाधिकारि(ण ? णः शुद्धा)न्तःकरणैरुपजायन्ते।

१. 'ण्डे' घ. पाठः.

* धनुरेखान्तर्गत 'गृहात् सन्न्यस्यो ? य' इति पठनीयम्।

तदधिकारिणो नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमक्षान्ती, मुमुक्षुत्वं चेति चतुर्विधं (साधनम) । तस्य साधनचतुष्टयसम्पन्नस्याधिकारिणस्तत्त्वम्पदार्थपरिशोधनपूर्वकैः सकलवेदान्तवाक्यश्रवणमनननिदिध्यासनधर्मविशेषैस्तनुभुवनात्मप्रपञ्च-प्रतिभासो निवर्तते । निवृत्ताशेषविशेषप्रपञ्चप्रतिभासोऽखण्डैकरसं नित्यशुद्धमुक्तपरमानन्दाद्वैतब्रह्ममात्रात्मतयावशिष्यत इति बादरायणमतम् । इति क्रमेण लोकायतार्हतबुद्धाक्षपादकणादकपिलजैमिनिबादरायणानामभिमतमिह प्रदर्शितमिति ॥

इति प्रपञ्चहृदये षड्वर्गप्रकरणं नाम

षष्ठं समाप्तम् ।

---

## अथ ज्ञानप्रकरणम् ।

अथेदानीमस्य प्रपञ्चस्य वेत्तृरूपं प्रदर्श्यते । एतद् यत कथितं वेद्यरूपं, तत् सर्वं क्षेत्रमित्युच्यते । एतद् यो वेत्ति, स क्षेत्रज्ञः । आब्रह्मस्तम्बपर्यन्तानां सर्वप्राणिनां शरीरं क्षेत्रम् । यद्यत् सविकारं दृश्यते, तत्तत् क्षेत्रमित्युच्यते । तदप्यव्यक्तमहदहङ्कारभूततन्मात्रमहाभूतमनःश्रोत्रादीन्द्रियदशकरागद्वेषसुखदुःखतत्सङ्घातचेतनाधृति । तद्वेत्ता क्षेत्रज्ञः सर्वात्मना संज्ञातव्यः । तं ज्ञात्वा मृत्युमत्येतीति । यतः क्षेत्रज्ञरूपं परं ब्रह्म न सत् तन्नासदनादिमत् सर्वतःपाणिपादं सर्वतोक्षिशिरोमुखं सर्वेन्द्रियश्रुतिमत् सर्वमावृत्य स्थितं सर्वेन्द्रियप्रकाशकं सर्वेन्द्रियहीनं सर्वत्रासक्तं सर्वभृद् निर्गुणं गुणभोक्तृ भूतानामन्तर्बहिःस्थितमचरं चरं चाविज्ञेयं दूरस्थमन्तिकस्थं च भूतेष्वविभक्तं

---

१ 'य त', २ 'स' ख घ पाठ

विभक्तमिव स्थितं भूतानां प्रभविष्णु ग्रसिष्णु च ज्योतिषामपि ज्योतिर्ज्ञानं ज्ञेयं ज्ञानगम्यं सर्वहृदि स्थितम्। एतद् ज्ञेयम्। ज्ञानरूपमुच्यते —

"अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥"

पुत्रदारगृहादिष्वसक्तिः समचित्तत्वमिष्टानिष्टोपपत्तिषु। परमपुरुषेऽव्यभिचारिणी भक्तिः।

"विविक्तदेशसेवित्वमरतिर्जनसंसदि।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्॥"

इत्येतत् सर्वं ज्ञानमिति कथ्यते। ज्ञानस्य साधनत्वाद् ज्ञानमेवेति कथितम्। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तदेव ज्ञानम्। अज्ञानमन्यत्। तज्ज्ञानादेव मुक्तिर्भवति। प्रकृतिपुरुषावुभावप्यनादी। तत्र गुणा विकाराश्च प्रकृतिजाः। कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुक्ता। सुखदुःखानां भोक्तृत्वे पुरुषो हेतुरित्युक्तः। प्रकृतिस्थः पुरुषो गुणान् प्रकृतिजान् भुङ्क्ते।

"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।
उपद्रष्टानुमन्ता च कर्ता भोक्ता महेश्वरः॥
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः।
य एनं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।

सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥"

केचिद् ध्यानेनात्मानं मनसा पश्यन्ति साङ्ख्येन योगेनापरे कर्मयोगेन जानन्ति । अन्ये त्वेवमजानन्तोऽन्येभ्यः श्रुत्वोपासते । श्रुतिमात्रादेव तेऽपि चातितरन्ति मृत्युम् ।

यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमं, तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगादेव । सर्वेषु भूतेषु समं तिष्ठन्तं विनश्यत्सु भूतेष्वविनश्यन्तं यः पश्यति स पश्यति ।

"समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥
अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत! ॥
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥"

इति क्षेत्रक्षेत्रज्ञविभागदर्शनाय भगवता वासुदेवेनोक्तम् । अन्यैरपि —

"इत्येतानि क्षेत्रमेतद् विजानन्
क्षेत्रज्ञस्थान् भोग्यभोक्तेन्द्रियैर्यः(?) ।
वेद्यादन्यं[1] सर्वदा वेदितारं
तं यो जानात्यक्षरं ब्रह्मवित् सः ॥"

तथा साङ्ख्ये—

"मूलप्रकृतिरविकृति-
र्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो
न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति । अन्यच्च— 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रुतिः ।
तथान्यदपि—

"एकमेव परं तत्त्वं विज्ञानघनमद्भुतम् ।
जात्यादिकल्पनाहीनमद्वितीयमलक्षणम् ॥
स्वात्मसंवेदनं नित्यं सनातनमतीन्द्रियम् ।
चिन्मात्रममृतं ज्ञानमनन्तमजमव्ययम् ॥
व्यक्ताव्यक्तस्वरूपेण व्यवस्थितमचञ्चलम् ।
व्याप्त्या विष्णुरिति ख्यातमभिन्नं भिन्नवत् स्थितम् ॥
योगिध्येयमविज्ञेयं परमार्थपराङ्मुखैः ।
लक्ष्यते बहुधा भिन्नमभिन्नमपि पापिभिः ॥"

एतदेवार्थं ब्रह्मणोक्तं—

---

१. 'वि' प. पाठ.

"यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः।
सम्भवः सर्वभूतात्मा नर इत्यभिधीयते॥
नराज्जातानि तत्त्वानि नाराणीति ततो विदुः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः॥
नारायणाज्जगत् सर्वं सर्गकाले प्रजायते।
तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते॥
नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्।
अण्डाद् ब्रह्मा पुनर्जज्ञे तेन लोका इमे कृताः॥"

तथा च श्रुतिः—

"नारायणपरं ब्रह्म तत्त्वं नारायणः परः।
नारायणपरो ज्योतिरात्मा नारायणः परः॥"

"स ब्रह्मा स हरिः स शिवः सेन्द्रः सोऽक्षरः परमः स्वराड्" इत्यादि।

परादपि परश्चासौ तस्मान्नास्ति परात् परः।
स[1] एव हि परो देवो विष्णुरित्यभिधीयते॥
यो वासः सर्वभूतानां तत्त्वानां च युगक्षये।
वासनात् सर्वभूतानां वासुदेव इति स्मृतः॥
तमाहुः पुरुषं केचित् केचिदीश्वरमव्ययम्।
विज्ञानमात्रं केचिच्च केचिद् ब्रह्म परं तथा॥
केचित् कालमनाद्यन्तं केचिज्जीवं सनातनम्।
केचिच्च परमात्मानं केचिज्जीवमनामयम्॥
केचित् क्षेत्रज्ञमित्याहुः केचिद्वै पञ्चविंशकम्।

१. 'स' ग घ पाठ

केचित् षड्विंशकं प्राहुः सप्तविंशतिकं तथा ॥
अङ्गुष्ठमात्रं केचिच्च केचित् पद्मरजोपमम् ।
एते चान्ये च मुनिभिः संज्ञाभेदाः पृथग्विधाः ॥
शास्त्रेषु कथिता विष्णोर्लोकव्यामोहकारकाः ।
एकं यदि भवेच्छास्त्रं ज्ञानं निःसंशयं भवेत् ॥
बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् ।
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
तस्मात् तु गहनान् सर्वांस्त्यक्त्वा शास्त्रार्थविस्तरान् ॥
अनन्यचेतसा ध्येयः सदा नारायणः परः ।
मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ॥
सोऽपि सद्गतिमाप्नोति किं पुनस्तत्परायणः ।
एतज्ज्ञात्वा तु परमं तत्त्वं नारायणाख्यकम् ॥
क्षिप्रं यास्यति तत्रैव सायुज्यं नात्र संशयः ।
नमो नारायणायेति यो वदेद् ब्रह्म शाश्वतम् ॥
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ।
तस्मान्नारायणः साङ्गः* परमात्मा सनातनः ॥
जगतः सृष्टिसंहारपरिपालनतत्परः ।
नारायणः परो धर्मस्तपो नारायणस्तथा ॥
नारायणः परं पुण्यं शास्त्राणि विविधानि च ।
वेदाः साङ्गास्तथा चान्ये विष्णुः सर्वेश्वरो हरिः ॥
पृथिव्यादीनि च तथा पञ्चभूतानि सोऽव्ययः ।
सर्वं विष्णुमयं ज्ञेयं यदेतत् सकलं जगत् ॥

---

१ 'बहुताः ।' घ. पाठ.

---

* इदं ज्ञेयमित्युत्तरेण सम्बध्यते ।

तस्यैव मायया व्याप्तं चराचरमिदं जगत् ।
तद्भक्तास्तद्गतप्राणाः पश्यन्ति परमार्थतः ॥
ईश्वरः सर्वभूतानां विष्णुस्त्रैलोक्यपालकः ।
तस्मिन्नेव जगत् सर्वं तिष्ठति प्रभवत्यपि ॥
जगत्संहरणे रुद्रः पालने विष्णुरुच्यते ।
उत्पत्तौ चाहमेवास्मि तथान्ये लोकपालकाः ॥
सर्वाधारो निराधारः सकलो निष्कलस्तथा ।
अणुर्महांस्ततोऽप्यन्यस्तस्माच्च परतः परः ॥
तमेव शरणं यान्ति सर्वे संहारकर्मणि ।
स पिता जगतोऽस्माकं माता च मधुसूदनः ॥
श्रवणान्मननाच्चैव निदिध्यासनतस्तथा ।
आराध्यः सर्वदा देवः पुरुषेण हितैषिणा ॥
निःस्पृहा नित्यसन्तुष्टा ज्ञानिनः संयतेन्द्रियाः ।
निर्ममा निरहङ्कारा रागद्वेषविवर्जिताः ॥
अपक्षपातिनः शान्ताः सर्वसङ्कल्पवर्जिताः ।
ध्यानयोगप(राः शा?रा दा)न्तास्तं पश्यन्ति जगत्पतिम् ॥
यथा जगदवस्थानं तथा कालान्तरादिषु ।
भूतं भव्यं भविष्यच्च विप्रकृष्टं तथैव च ॥
सूक्ष्मं स्थूलं तथा सम्यक् पश्यन्ति ज्ञानचक्षुषा ।
तच्चित्तास्तद्गतप्राणा नारायणपरायणाः ॥
अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम् ।
कुतर्कज्ञानदृष्टीनां विभ्रान्तेन्द्रियवाजिनाम् ॥
किं तत्र बहुभिर्मन्त्रैः किं तत्र बहुभिः स्मृतैः ।

नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥
चीरवासा जटी वापि त्रिदण्डी मुण्ड एव वा ।
पूजितो वा द्विजश्रेष्ठ! न लिङ्गं धर्मकारणम् ॥
ये नृशंसा दुरात्मानः पापाचारपरास्तथा ।
तेऽपि यान्ति परं स्थानं नरा नारायणाश्रयाः ॥
लिप्यते न स पापेन वैष्णवो वीतकल्मषः ।
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ॥"

उक्तं च भगवता नारायणेन—

"ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्त्रमिवाम्भसा ॥"
"अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥"

इति । स क्षेत्रज्ञः परमात्मा नारायणः सम्यग्ज्ञानेनैव ज्ञेयः । उक्तं च भगवता स्कन्देन—

"निर्वेदाच्च विरागः स्याद् विरागाज्ज्ञानसम्भवः ।
ज्ञानेन तं परं ज्ञात्वा विदेहः शान्तिमृच्छति ॥"

इति । अन्यच्च—

"विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यद् गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥"

---

१. 'वा' म. पाठ.

एवं सर्वार्थानामनित्यतां चिन्तयतः संसारे निर्वाणपुरस्स(रे ? रो) निर्वेदः शीघ्रं जायते । तेन निर्वेदेनास्य पुनर्विमर्शो जायते । पुनर्विमर्शेनास्य सर्वत्र वैराग्यं जायते । वैराग्येण परा शान्तिः । तस्माद् वैराग्यं मोक्षस्योपनिपदिति कीर्तितम् ।

तज्ज्ञानं साङ्ख्ययोगाभ्यां प्रायेणोत्पद्यते । तत्र साङ्ख्यज्ञानं पूर्वं[1] प्रवक्ष्यामि, यज्ज्ञात्वा न पुनः संसारे प्रवर्तते मर्त्यः । ते साङ्ख्याः सन्न्यासकोविदा ज्ञानेनैव विमुक्ताः । घोरं शारीरं तपः साङ्ख्या निरर्थकमाहुः । तेषां ज्ञानं पञ्चविंशतिविज्ञानमाहुः । तदपि मूलप्रकृतिरव्यक्तम् । अव्यक्तान्महज्जायते, महतोऽहङ्कारः, ततस्तन्मात्रपञ्चकम् । एकादशेन्द्रियाणि तन्मात्रेभ्योऽभवन्, तेभ्यः पञ्चभूतानि । तेषां समुच्चयः क्षेत्रम् । पञ्चविंशतिस्तत्त्वानि । अस्य क्षेत्रस्य सङ्क्षेप उक्तः । पञ्चविंशतिरिति पुरुषेण सार्धमाहुः । सत्त्वं रजस्तम इति प्रकृतिसम्भवा गुणाः । तैरात्मजैर्गुणैरखिलं लोकं प्रकृतिः सृजति ।

"इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः"

इति प्रकृतेर्गुणा मनीषिभिर्वेदितव्याः । तेषां लक्षणं विकल्पश्च पृथक् प्रवक्ष्यते —

नित्यमेकमणु व्यापि क्रियाहीनमहेतुकम् ।
अग्राह्यमिन्द्रियैः सर्वैरेतदव्यक्तलक्षणम् ॥

1. 'र्व प्र' ख. पाठ.

अव्यक्तं प्रकृतिर्मूलं प्रधानं योनिरव्ययम् ।
अव्यक्तस्यैव नामानि शब्दैः पर्यायवाचकैः ॥
सूक्ष्मत्वात् तदनिर्देश्यं तत् सदित्यभिधीयते ।
तन्मूलं च जगत् सर्वं तन्मूला सृष्टिरुच्यते ॥

प्रकृतिजानां सत्त्वादीनां गुणाः कथ्यन्ते समासेन । सात्त्विका गुणास्त्रयः सुखं तुष्टिः प्रकाश इति । रागद्वेषौ सुखदुःखे स्तम्भश्चेति रजोगुणाः । अप्रकाशतन्द्रीभयमोहास्तमोगुणाः ।

श्रद्धा प्रहर्षो विज्ञानमसम्मोहो दया धृतिः ।
सत्त्वे प्रवृद्धे वर्धन्ते विपरीते विपर्ययः ॥
रागद्वेषौ मनस्तापो द्वेषो(?) लोभस्तथा तृषा ।
प्रवृद्धे परिव(र्त?र्ध)न्ते रजस्येतानि नित्यशः ॥
विषादः संशयो मोहस्तन्द्री निद्रा भयं तथा ।
तमस्येतानि वर्धन्ते प्रवृद्धे हेत्वहेतुतः ॥
एवमन्योन्यमेतानि वर्धन्ते च पुनः पुनः ।
हीयन्ते वा तथा नित्यमभिभूतानि भूरिभिः ॥
तत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इ(त्यु?त्य)पेक्षेत तं तदा ॥
यदा सन्तापसंयुक्तं चित्तक्षोभकरं भवेत् ।
वर्तते रज इत्येवमित्युपेक्षेत तं तदा ॥
यदा सम्मोहसंयुक्तं यद् विषादकरं भवेत् ।

१. 'र्ध' ख ग. पाठ.

अप्रतर्क्यमविज्ञेयं तमस्तादिति चिन्तयेत् ॥
समासात् सात्त्विको धर्मः समासाद् राजसं धनम् ।
समासात् तामसः कामस्त्रिवर्गे त्रिगुणाः क्रमात् ॥
ब्रह्मादिदेवसृष्टिर्या सात्त्विकीति प्रकीर्त्यते ।
राजसी मानुषी सृष्टिस्तैर्यग्योनीति तामसी ॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणमर्यादा अधो गच्छन्ति तामसाः ॥
देवमानुषतिर्यक्षु यद् भूतं सचराचरम् ।
आदिप्रकृतिसंयुक्तं व्याप्तमेभिस्त्रिभिर्गुणैः ॥
अत ऊर्ध्वं प्रवक्ष्यामि महदादीनि लिङ्गतः ।

विज्ञानविवेकौ महदादिलक्षणो(?) महान् बुद्धिर्मतिः प्रज्ञेति महतो नामानि । गुणानां च महदादिक्रियायोगो विधीयते । वैकृतान्महतोऽभिमानः पुनर्भवेत् । समासतो लक्षणेनाहङ्कारः स विज्ञेयः ।

अहङ्कारेण भूतानां सर्गो नानाविधो भवेत् ।
अहङ्कारनिवृत्तिर्हि निर्वाणायोपपद्यते ॥
खं वायुरग्निः सलिलं पृथिवी चेति पञ्चमी ।
महाभूतानि सर्वेषां भूतानां प्रभवाप्ययौ ॥
शब्दः श्रोत्रं तथा खानि त्रयमाकाशयोनिजम्(?) ।
स्पर्शस्त्व(ग्घ्रा ? क् प्रा)णनं चेष्टा पवनस्य गुणाः स्मृताः ॥
रूपं पाकोऽक्षिणी ज्योतिश्चत्वारस्तेजसो गुणाः ।
रसः स्नेहस्तथा जिह्वा शैत्यं च जलजा गुणाः ॥
गन्धो घ्राणं शरीरं च पृथिव्यास्ते गुणास्त्रयः ।

इति सर्वगुणो दे[१](ही?हो) विख्यातः पाञ्चभौतिकः ॥
गुणाः पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तराण्यपि ।
तस्मान्नैकगुणाश्चेह दृश्यन्ते भूतसृष्टयः ॥
उपलभ्याप्सु चेद् गन्धं केचिद् ब्रूयुरनैपुणाः ।
स तु गन्धस्त्वपां नास्ति पृथिव्या एव तद्गुणः ॥
भूमिर्गन्धे रसे चापो ज्योती रूपे च संश्रितम् ।
प्राणापानाश्रयो वायुः खं[२](?) चाकाशः शरीरिणाम् ॥
केशास्थिनखदन्तत्वक्पाणिपादशिरांसि च ।
पृष्ठोदरक[३]टिग्रीवं सर्वभूतात्मकं मतम् ॥
यत्किञ्चिदपि कार्येऽस्मिन् धातुदोषमलाश्रितम् ।
तत्सर्वं भौतिकं ज्ञेयं देहे नैवास्त्यभौतिकम् ॥
बुद्धीन्द्रियाणि कर्णत्वगक्षिजिह्वाग्रनासिकाः ।
कर्मेन्द्रियाणि वाक्पाणिपादमेढ्रगुदं तथा ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
बुद्धीन्द्रियार्थाञ्जानीयाद् भूतेभ्यस्तु विनिःसृतान् ॥
वाक्यं क्रिया गतिः प्रीतिरुत्सर्गश्चेति पञ्चधा ।
कर्मेन्द्रियार्थाञ्जानीयात् ते च भूतोद्भवा मताः ॥
इन्द्रियाणां तु सर्वेषामीश्वरं मन उच्यते ।
प्रार्थनालक्षणं तच्च द्वीन्द्रियं तु मनः स्मृतम् ॥
नियुक्तेन सदा तानि भूतानि मनसा सह(?) ।
नियमे च विसर्गे च मनसः कारणं प्रभुः ॥
इन्द्रियाणीन्द्रियार्थश्च स्वभावश्चेतना धृतिः ।
भूतभूतविकाराश्च शरीरमिति संज्ञितम् ॥

---

१ 'वि' ख ग पाठ　　२ 'खभासा' घ पाठ　'खेधाका',　३ 'टी' ख पाठ

शरीराच्च परो देही शरीरं च व्यपाश्रितः ॥
शरीरिणः शरीरस्य योऽन्तरं वेत्ति वै मुनिः ।
[1]अरसस्पर्शगन्ध(श्च ? ञ्च) रूपशब्दविवर्जितम् ॥
अशरीरं शरीरेषु निरीक्षन्तं निरिन्द्रियम् ॥
अव्यक्तं सर्वदेहेषु मर्त्येष्वमरमानितम् ।
यः पश्येत् परमात्मानं बन्धनैः स विमुच्यते[2] ॥

अन्यच्च —

"सव्यापारे शरीरेऽस्मिन् निर्व्यापारमकल्मषम् ।
चिन्तयेत् सर्वदात्मानं मुक्त एवेति वेदगीः ॥
नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि ।
मनसैव प्रदीपेन महानात्मा प्रदृश्यते ॥
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।
वसत्येको महावीर्यो नानाभावसमन्वितः ॥
नैव चोर्ध्वं न तिर्यक् च नाधस्तान्न कुतश्चन ।
इन्द्रियैरिह बुद्ध्या वा दृश्यते न कदाचन ॥
ईश्वरः सर्वभूतेषु वसत्येको निरञ्जनः ।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥
नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः ॥
तमेवाहुरणुभ्योऽणुं महद्भ्यश्च महत्तरम् ।"

अस्मिन्नर्थे श्रुतिरपि — 'अस्थूलमनणु अह्रस्वमदीर्घमि'त्यादि ।

"ईश्वरः सर्वलोकस्य स्थावरस्य चरस्य च ।

---

१. 'रस स्पर्शश्च गन्धश्च रूप श', २. 'ते। नै' घ पाठः
ग

बहुधा सर्वभूतेषु व्याप्य तिष्ठति शाश्वतः ॥
क्षेत्रज्ञमेकतः कृत्वा सर्वक्षेत्रमथैकतः ।
एवं तं विमृशेज्ज्ञानी संयतः सततं हृदा ॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
अकर्तालेपको नित्यो मध्यस्थः सर्वकर्मणाम् ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
अजरोऽयमचिन्त्योऽयमव्यक्तोऽयं सनातनः ।
देहे तेजोमयो देही तिष्ठतीत्यपरे विदुः ॥
ज्ञानमूष्मा च वायुश्च शरीरे जीवसंज्ञकाः ।
इत्येते निश्चिता बुद्ध्या तत्र ये बुद्धिचिन्तकाः ॥
अपरे सर्वलोकांश्च व्याप्य तिष्ठन्तमीश्वरम् ।
ब्रुवते केचिदत्रैव तिले तैलमिव स्थितम् ॥
अपरे नास्तिका मूढा हीनत्वात् स्थूललक्षणैः ।
नास्त्यात्मेति विनिश्चित्य प्राहुस्ते नरकालयाः ॥
एवं नानाविधानेन विमृशन्ति महेश्वरम् ।
रूढमा ब्रह्मणो लोका नित्यमव्ययमक्षरम् ॥
अध्यात्मा सर्वदेहेषु हेतुस्तत्र सुदुर्गमः ।
ऋषिभिश्चापि देवैश्च व्यक्तमेव न दृश्यते ॥
दृष्ट्वात्मानं महात्मानं पुनः स न निवर्तते ।
तस्यादर्शनतो मोहो विदिते परमा गतिः ॥"

इति । अन्यदप्युच्यते देहदेहिनोर्विभागज्ञानाय —

"सदे[1]कसुखरूपस्य मायिनः परमात्मनः ।

---

१ 'दे' ख ग पाठ.

यदवच्छेदकं तद्धि देहो जन्मविनाशवत् ॥
चैतन्यावरको देहश्चैतन्यादेव जायते ।
यथैव कालिमादर्शे यथा धूमस्तु पावके ॥
पञ्चकोशमयो देहो रम्भास्तम्भोपमः स्मृतः ।
तदन्तःस्थः स्थिरो जीवो रम्भागर्भोपमः स्मृतः ॥[1]
बाह्यमन्नमयं कोशमन्तः प्राणमयं तथा ।
मनोमयं तदन्तस्तु विज्ञानमयमेव च ॥
आनन्दमयमित्येवं कोशं पञ्चविधं विदुः ।
मायया त्वधिकारिण्या यदात्मोपहितो भवेत् ।
स्वरूपैकरसः कोशस्तस्यानन्दमयस्तदा ॥
वटबीजे वटो वृक्षस्तदन्तर्हितविग्रहः ।
निभृतः सर्वरूपेण वर्तते तु यथा तथा ॥
त्रिपु बाह्येपु कोशेपु विज्ञानं तु यदा स्थितम् ।
तद् विसृज्य स्वयं भाति स विज्ञानमयः स्मृतः ॥
लोहभावं तिरस्कृत्य वह्निर्लोहगतो यथा ।
स्वं रूपं भासयत्येव स्वप्रकाशवशात् तथा ॥
सत्त्वादिगुणसंयुक्तमनःपूर्वान्तरेन्द्रियैः ।
युक्तो मनोमयः कोश आत्मनः परिकीर्तितः ॥
क्षीरव्याप्तं यथा सर्पिः प्राणान्नमयकोशगम् ।
चतुर्दशाना वायूना प्राणादीनां तु संहतिम् ॥
व्यापारशक्तियुक्तानां कोशं प्राणमयं विदुः ।
बाह्येऽन्नमयकोशेऽस्मिन् व्यापकत्वेन संस्थितम् ॥

1. 'स्तम्भोप' घ. पाठ.

यदा तु भौतिकं शुक्लं शोणितं च सुसङ्गतम् ।
बाह्यस्त्वन्नमयः कोशस्तदा समुपजायते ॥
श्रिते क्षीरे च तक्रेण युक्तं तद्द्वितयं यथा ।
जायते दधिरूपेण तथा देहोऽपि जायते ॥

सप्तधातुमयोऽन्नमयः कोशः स्थूलदेह इत्युक्तः । तद्व्यतिरिक्ताः प्राणमयमनोमयविज्ञानमयानन्दमयाख्याश्चत्वारः कोशाः सूक्ष्मदेहत्वेनाभिहिताः । तयोः स्थूलसूक्ष्मयोर्देहयोर्दृश्ययोरचिदात्मनोर्द्रष्टा चिद्रूप आत्मा तत्पृथक्त्वेन संस्थितः सिद्धः । यद्यद् दृश्यजातं तत्तद् द्रष्टुः स्वस्माद् भिन्नमित्यवगन्तव्यं, यथा घटः । तस्माद् दृश्यात् प्रपञ्चाद् व्यतिरिक्तः क्षेत्रज्ञश्चिद्रूपः सत्यो नित्यः स्वयंप्रकाशः सुखरूपोऽव्ययोऽद्वयः परमात्मा द्रष्टा नारायणः परो ज्ञातव्यः श्रोतव्यो निदिध्यासितव्यः । तेनैव मृत्युमत्येति । कपिलादिभिराचार्यैः सेवितः सनातनः साङ्ख्यधर्मः कथितः ॥

इति प्रपञ्चहृदये ज्ञानप्रकरणं नाम
सप्तमं समाप्तम् ।

---

## अथ योगप्रकरणम् ।

अथेदानीं योगधर्मोऽपि समासरूपेण कथ्यते । निरुद्धवृत्त्यन्तरस्य चित्तस्य परमेश्वरे निश्चला या वृत्तिः सा योग इत्युच्यते । योगः पञ्चधा भिन्नः मन्त्रयोगस्पर्शयोगभावयोगाभावयोगमहायोगभेदेन । तदुक्तं —

"मन्त्राभ्यासवशेनैव मन्त्रवाच्यार्थगोचरा ।
अव्याक्षेपा मनोवृत्तिर्मन्त्रयोग उदाहृतः ॥

प्राणायामसखा सैव स्पर्शयोगोऽभिधीयते ।
सा मन्त्रस्पर्शनिर्मुक्ता भावयोगः प्रकीर्त्यते ॥
विलीनावयवं विश्वं खं रूपं भाव्यते यतः ।
अभावयोगः सम्प्रोक्तो नाभावाद् वस्तुनः सतः ॥
शिवस्वभाव एवैकश्चिन्त्यते निरुपाधिकः ।
यया सैव मनोवृत्तिर्महायोग इहोच्यते ॥"

इति । (स्व?य)स्य दृष्टे तथानुश्राविते विरक्तं मनो विषये योगे तस्यैवाधिकारोऽस्ति कस्यचिन्नान्यस्येति ।

"विषयद्वयदोषाणां गुणानामीश्वरस्य तु ।
विमर्शादेव सततं विरक्तं जायते मनः ॥"

इत्युक्तम् । स योगः समासतोऽष्टाङ्गः षडङ्गो वा । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि । तेष्वासनादीनि षडङ्गानि ।

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यम इत्युच्यते सद्भिः पञ्चावयवयोगतः ॥
शौचं तुष्टिस्तपश्चैव दया प्रणिधिरेव च ।
इति पञ्चप्रभेदः स्यान्नियमः स्वांशभेदतः ॥
स्वस्तिकं पद्ममर्धेन्दु वीरं[1] योगं प्रसारितम् ।
पर्यङ्कं च यथेष्टं च प्रोक्तमासनमष्टधा ॥
प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् ।
तद्रेचकं पूरकं च कुम्भकं च त्रिधोच्यते ॥

1. 'रयो' घ. पाठः.

नासिकापुटमङ्गुल्यापीड्यैकमपरेण तु ।
औदरं रेचयेद् वायुं रेचनाद् रेचकः स्मृतः ॥
बाह्येन मरुता देहं दृतिवत् परिपूरयेत् ।
नासापुटेनापरेण पूरणात् पूरकं मतम् ॥
न मुञ्चति न गृह्णाति वायुमन्तर्बहिः स्थितम् ।
सम्पूर्णकुम्भवत् तिष्ठेदचलः स तु कुम्भकः ॥"

रेचकाद्यत्रयं द्रुतविलम्बितं न कुर्यात् । उद्घा(र ? त)क्रमयोगेनाभ्यसेन्नाडीशोधनपूर्वकम् । कन्यसक्रमादभ्यसेत् । उक्तं च —

"कन्यसः सकृदुद्घातः स तु द्वादशमात्रिकः ।
मध्यमश्च द्विरुद्घातश्चतुर्विंशतिमात्रिकः ॥
उत्तमश्च त्रिरुद्घातः षट्त्रिंशत्तालमात्रकः ।
स्वेदकम्पादिजनकः प्राणायामस्तदुत्तरः ॥
आनन्दोद्भवरोमाञ्चनेत्रोद्घूर्णाङ्गमोटनम् ।
जल्पभ्रमणमूर्छाद्यं जायते वात्र योगिनः ॥
जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलिस्फोटनं कुर्युः सा मात्रेति प्रकीर्त्यते ॥
मात्रोत्क्रमेण विज्ञाय उद्घातक्रमयोगतः ।
नाडीशुद्ध्यादिपूर्वं च प्राणायामं समाचरेत् ॥"

इति । अगर्भश्च सगर्भश्चेति द्विविधः प्राणायामः । तत्र जपध्यानरहितोऽगर्भः । जपध्यानोपेतः सगर्भः । अगर्भात् सगर्भः शताधिकः । तस्मात् सगर्भमेव कुर्यात् । प्राणविजयादेव दश वायवो वि(ज ? जी)यन्ते । तेऽपि प्राणापानव्यानोदानसमान-

नागकूर्मकृकलदेवदत्तधनञ्जयाः । तत्र प्रयाण(?)करणः प्राणः । अपा(न ?)नयनादपानो मलादीनाम् । व्यानोऽन्नरसमशेषाण्यङ्गानि व्यान(श ?)यति । उद्वेजयति (?) कर्माणीत्युदानः । समं नयति गात्राणीति समानः । उद्गारकारको नागः । कूर्म उन्मीलनकरः[2] । क्षुतकृत् कृकलः । जृम्भणकृद् देवदत्तः । धनञ्जयः सर्वव्यापी मृतं च न विमुञ्चति । इति क्रमेणाभ्यस्यमानः प्रमाणवत्प्राणायामोऽखिलं दोषं निर्दहति, देहं च रक्षति । प्राणे विजिते चिह्नानि लक्ष्यन्ते । विण्मूत्रश्लेष्मदोषाणाम् अल्पभावः बहुभोजनसामर्थ्यं चिरादुच्छ्वासश्च, लघुत्वं शीघ्रगामित्वं स्वरसौष्ठवमुत्साहश्च, सर्वरोगक्षयो बलं तेजश्च सुरूपता च, धृतिर्मेधा युवत्वं स्थिरता प्रसङ्गता(?) च । प्राणायामेन सर्वपापपरिक्षयः स्यात् । स नित्यं कृतो भ्रूणहनमपि मासात् पुनाति । ऋतुद्वयाज्जन्मान्तरकृतादघात् पुनाति । संवत्सराद् ब्रह्म विद्वान् स्यात् । तस्मान्नित्यमभ्यसनीयः ।

"इन्द्रियाणि प्रसक्तानि यथास्वं विषयेष्विह ।
आहृत्य यन्निगृह्णाति प्रत्याहारः स उच्यते ॥"

मनःपूर्वाणीन्द्रियाण्येव स्वर्गनरकौ । निगृहीतानि स्वर्गाय विसृष्टानि नरकायेति यतः, तस्मादिन्द्रियाश्वान् निगृह्य ज्ञानवैराग्ययुक्तः स्वात्मनात्मानमुद्धरेत् ।

"धारणा नाम चित्तस्य स्थानबन्धः समासतः ।
स्थानं च शिव एवैको नान्यद् दोषाश्रयं यतः ॥
कालं चाप्यवधीकृत्य स्थानेऽवस्थापितं मनः ।

१ 'ग उ', २. 'र-कूर्म । क्षु' घ पाठ.

न प्रच्यवति यल्लक्ष्याद् धारणा साभिधीयते ॥
मनसः परमं धैर्य धारणातः प्रजायते ।
तस्माद् धीरं मनः कुर्याद् धारणाभ्यासयोगतः ॥

अव्याक्षिप्तेन मनसा मुहुरीश्वरचिन्ता ध्यानं नाम।

ध्येयावस्थितचित्तस्य सदृशप्रत्ययस्य यः ।
प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते ॥
सर्वमन्यत् परित्यज्य शिव एकः शिवङ्करः ।
परो ध्येयोऽथवा सेति समाप्ताथर्वणी श्रुतिः ।
सर्वप्रभू शिवौ यस्मात् सर्वगौ सततोदितौ ।
सर्वज्ञौ सततं ध्येयौ नानारूपविभेदतः ॥
विमुक्तिप्रत्ययः पूर्वमैश्वर्यं चाणिमादिकम् ।
इत्येतद् द्विविधं ज्ञेयं ध्येयस्यास्य प्रयोजनम् ॥
जपाच्छ्रान्तः पुनर्ध्यायेद् ध्यानाच्छ्रान्तः पुनर्जपेत् ।
जपध्यानाभियुक्तस्य क्षिप्रं योगः प्रसिध्यति ॥
धारणा द्वादशायामा ध्यानं द्वादशधारणा ।
ध्यानंद्वादशकं यावत् समाधिरभिधीयते ॥"

अष्टमं योगाङ्गं समाधिरिति वदन्ति । सर्वत्र प्रज्ञालोकः समाधिना(सर्वत्र ?) प्रवर्तते ।

"यदर्थमात्रनिर्भासं[2] स्तिमितोदधिवत् स्थितम् ।
स्वरूपशून्य(म?मा)ध्यानं तत् समाधिरिहोच्यते ॥
ध्येये मनः समावेश्य तिष्ठेदविचलश्चिरम् ।

१. 'न द्रा' स प पाट   २ 'शु'प 'धं' क पाठ.

निर्वाणानलवद् योगी समासीनः प्रकीर्तितः ॥
न शृणोति न चाघ्राति न रंस्यति न पश्यति ।
न च स्पर्शं विजानाति न सङ्कल्पयते मनः ॥
न चाभिमन्यते किंचिन्न च बुध्यति काष्ठवत् ।
एवमीश्वरसंलीनः समाधिस्थ इहोच्यते ॥
यथा दीपो निवातस्थः स्पन्दते न कदाचन ।
तथा समाधिनिष्ठोऽपि तस्मान्न चलते सुधीः ॥"

एवमुक्तं योगं साङ्गमभ्यस्यतो योगिनः तदन्तराया विघ्नाः सर्वे शनैः शनैर्नश्यन्ति ।

"आलस्यं व्याधयस्तीव्राः प्रमादस्तत्त्वसंशयः ।
अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम् ।
दुःखानि दौर्मनस्यं च विषयेषु च लोलता ।"

युञ्जतां योगिनामेते दशान्तरायाः । तत्र देहचेतसोरलसत्वमालस्यम् । धातुवैषम्यजा दोषाः । कर्मयोगजा व्याधयः । योगस्य साधनानामभाव(ता?ना) प्रमादः । इदं, न इत्युभयालम्बि ज्ञानं यत् तत् तत्त्वसंशयः । मनसोऽप्रतिष्ठा त्वनवस्थितिः । योगे भावरहिता वृत्तिरश्रद्धा । विपर्यस्ता या मतिः सा भ्रान्तिः । पुंसामज्ञानजं चेतस्याध्यात्मिकं दुःखम् । आधिभौतिकं पुराकृतैः स्वतो दुःखमङ्गोत्थम् । अशैन्यस्त्रविषादिकमा[2]धिदैविकम् । इच्छाविघात(जं?जो) दो(षं?षो) दौर्मनस्यम् । विषयेषु विभ्रमो लोलता । एतेषु विघ्नेषु शान्तेषु योगिनो योगासक्तस्य दिव्याः सिद्धिसूचका उपसर्गाः प्रवर्तन्ते —

१ -'दा' ग पाठ  २ 'ज्ञन्यस्तवि' ग. पाठ

"प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः ।
उपसर्गाः षडित्येते त्यागे योगस्य सिद्धयः ॥
सूक्ष्मे व्यवहितेऽतीते विप्रकृष्टे त्वनागते ।
प्रतिभा कथ्यते यार्थे प्रतिभा सा यथातथम् ॥
श्रवणं सर्वशब्दानां श्रवणं त्वप्रयत्नतः ।
वार्ता वार्तासु विज्ञानं सर्वेषामेव देहिनाम् ॥
दर्शनं नाम दिव्यानां दर्शनं त्वप्रयत्नतः ।
तथास्वादश्च दिव्येषु रसेष्वास्वाद उच्यते ॥
स्पर्शनाधिगमैस्तद्वद् वेदना नाम विश्रुता ।
गन्धानां (च ? चापि) दिव्यानामाब्रह्मभुवनावधि ॥
उपतिष्ठन्ति रत्नानि धनानि च बहूनि च ।
स्वच्छन्दमधुरा वाणी विविधास्य प्रवर्तते ॥
रसायनानि सर्वाणि दिव्याश्चौषधयस्तथा ।
सिध्यन्ति प्रणिपत्यैनं नयन्ति सुरयोषितः ॥
योगसिद्ध्येकदेशेऽपि दृष्टे मोक्षे भवेन्मतिः ।
दृष्टमेतन्मया यद्वत् तद्वन्मोक्षो भवेदिति ॥
ह्रस्वता स्थूलता बाल्यं वार्धक्यं चैव यौवनम् ।
नानाजातिस्वरूपं च चतुर्णां देह(धारिणां?धारणम्) ॥
पार्थिवांशं विना नित्यं सुरभीगन्धसंग्र(हम् ? हः) ।
एवमष्टगुणं प्राहुः पैशाचं पार्थिवं पदम् ॥
जले निवसनं चैव भूम्यामिव विनिर्गमः ।

१. 'चा' क. ग पाठ　२. 'त' ग. पाठः. ३. 'रसा', ४. 'नि' घ. पाठ.

इच्छेच्छक्तः स्वयं पातुं समुद्रमपि नातुरः ॥
यत्रेच्छति जगत्यस्मिंस्तत्रैव जलदर्शनम् ।
विना कुम्भादिकं पाणौ जलसञ्चयधारणम् ॥
रसाधिकं भवेच्चास्य त्रयाणां देहधारणम् ।
निर्व्रणत्वं[1] शरीरस्य पार्थिवैश्च समन्वितम् ॥
तदिदं षोडशगुणमाप्यमैश्वर्यमद्भुतम् ।
शरीरादग्निनिर्माणं तत्तापभयवर्जनम् ॥
शक्यं जगदिदं दग्धुं यदीच्छेदप्रयत्नतः ।
स्थापनं चालनं[2] चाप्सु पाणौ पावकधारणम् ॥
दग्धसर्गो यथापूर्वं स्मृत्यैवान्नादिपाचनम् ।
द्वाभ्यां देहविनिर्माणमाप्यैश्वर्यसमन्वितम् ॥
एतच्चतुर्विंशतिधा तैजसं परिचक्षते ।
मनोजवत्वं भूता(ङ्गः ? ङ्गे) क्षणादन्तःप्रवेशनम् ॥
पर्वतादिमहाभारभरणं चाप्रयत्नतः ।
गुरुत्वं च लघुत्वं च पाणावनिलधारणम् ॥
अङ्गुल्यग्रनिपाताद्यैर्भूमेरपि च कम्पनम् ।
एकेन देहनिष्पत्तिर्युक्तं भोगैश्च तैजसैः ॥
द्वात्रिंशद्गुणमैश्वर्यं मारुतं कवयो विदुः ।
छा[3]याविहीननिष्पत्तिरिन्द्रियाणामदर्शनम् ॥
खेचरत्वं यथाकाममिन्द्रियार्थैः समन्वयः ।
आनिलैश्वर्यसंयुक्तं चत्वारिंशद्गुणं महत् ॥

१. 'र्वां' घ. पाठः. २. 'नस्याप्सु' ख. ग. पाठः. ३. 'मा' घ. पाठः.

ऐन्द्रमैश्वर्यमाख्यातमाम्बरं तु प्रचक्षते ।
यथाकामोपलब्धित्वं यथाकामाविनिर्गमः ॥
सर्वस्याद्युद्भवश्चैव सर्वगुह्यार्थदर्शनम् ।
कर्मानुरूपनिर्माणं वशित्वं प्रियदर्शनम् ॥
संसारदर्शनं चैव भोगैरेतैः समन्वितम् ।
एतच्चान्द्रमसैश्वर्यं मानसं गुणतोऽधिकम् ॥
छेदनं ताडनं चैव बन्धनं मोचनं तथा ।
ग्रहणं सर्वभूतानां संसारपरिवर्तनम् ॥
प्रसादश्चापि सर्वेषां मृत्युकालजयस्तथा ।
आभिमानिकमैश्वर्यं प्राजापत्यं प्रचक्षते ॥
एतच्चान्द्रमसैर्भोगैः षट्पञ्चाशद्गुणं महत् ।
सर्गः सङ्कल्पमात्रेण त्रीणं संहरणं तथा ॥
साधिकाश्च[2] बलतो लोकचित्तप्रवर्तकैः[3] ।
असादृश्येन सर्वस्य[4] निर्माणं जगतां पृथक् ॥
शुभाशुभस्य करणं प्राजापत्यैश्च संयुतम् ।
एतच्चतुष्षष्टिगुणं ब्राह्ममैश्वर्यमुत्तमम् ॥
*बौद्धादस्मात् परं गौणमैश्वर्यं प्राकृतं विदुः ।*
वैष्णवं तत् समाख्यातमस्यैव [5]भैवने स्थितम् ॥
ब्रह्मणा तद्गुणं सर्वं वेत्तुमन्यैर्न [6]शक्यते ।
तत्परं पौरुषं गौणं गाणेशं पारमेश्वरम् ॥
विष्णुना तत्पदं किञ्चिद्वक्तुमन्यैर्न शक्यते ।

---

१ 'प्राणस' ख. पाठ २ 'श्च', ३ 'कम् ।' घ. पाठ ४. 'त्र' ग घ पाठ ५ 'भु', ६. 'विद्यत' घ. पाठ.

व्युत्थानसिद्धयश्चैताः सर्वा एवौपसर्गिकाः ॥
निरोद्धव्यं प्रयत्नेन वैराग्येण परेण तु ।
प्रतिभादिषु क्षुद्रेषु गुणेष्वासक्तचेतसः ॥
न भवेत् परमैश्वर्यमक्षयं सार्वकामिकम् ।"

तस्माद् देवासुरमहीभृतां भोगांश्च सर्वांस्तृणवत् त्यजेत्। तस्य योगसिद्धिः परा भवेदिति । अथवानुग्रहाय जगतां स्वेच्छया विहर्तुमिच्छेत् । यथाकामं भोगान् भुक्त्वा पश्चान्मुक्तिं प्रयाति ।

अथ योगस्य प्रयोगं वक्ष्ये —

"शुभे काले शुभे देशे शुभक्षेत्रादिके पुनः ।
विजने जन्तुरहिते निश्शब्दे बाधवर्जिते[1] ॥
सूपलिप्तस्थले सौम्ये गन्धपुष्पाधिवासिते ।
++मुक्तसमाकीर्णे वितानादिविचित्रिते ॥
तथा कुशसमित्तोयफलपुष्पसमन्विते ।
नाग्न्यभ्याशे जलाभ्याशे शुष्कपर्णचयेऽपि वा ॥
न दंशमशकाकीर्णे सर्पश्वापदसेविते ।
न च दुष्टमृगाकीर्णे न भये दुर्जनावृते ॥
श्मशाने चैत्यवल्मीकजीर्णागारे चतुष्पथे ।
नदीनदसमुद्राणां तीरे रथ्यान्तरेऽपि वा ॥
न जीर्णोद्यानगोष्ठादौ नानिष्टे न च निन्दिते ।
न जीर्णामरसोद्धारे न च विण्मूत्रवासिते ॥
नच्छर्द्यां नातिसारे च नातिभुक्तश्रमान्वितः ।

1. 'बाधने । न' ख ग पाठ ।

न चातिचिन्ताकुलितो न चातिक्षुत्पिपासितः ॥
नापि स्वगुरुकर्मादौ प्रसक्तो योगमाचरेत् ।
युक्ताहारविहारश्च युक्तचेष्टः स्वकर्मसु ॥
युक्तनिद्रावबोधश्च सर्वायुक्तविवर्जितः ।
आसनं विपुलं रम्यं मृदुलं सुसमं शुचिः ॥
मृदुचर्मपरीधानमथवान्यच्छुभं सुखम् ।
कल्पयित्वा समारुह्य समस्थिरसुखं यथा ॥
पद्मकस्वस्तिकादीनामभ्यस्तेनासनेन तु ।
नत्वा गुरुगणेशादीनपि वन्द्याननुक्रमात् ॥
ऋजुग्रीवाशिरोवक्षा नातिश्लिष्टोष्ठलोचनः ।
किञ्चिदुन्नामितशिरा दन्तैर्दन्तानसंस्पृशन् ॥
दन्ताग्रसन्निधौ जिह्वामचलां सन्निवेश्य च ।
पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः (?) ॥
ऊर्वोरुपरि संस्थाप्य न भूतिर्यगयत्नतः ।
दक्षिणं करपृष्ठं तु न्यस्य वामतलोपरि ॥
उन्नाम्य शनकैः पृष्ठमुरो विष्टभ्य चाग्रतः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
संहृतप्राणसञ्चारः पाषाण इव निश्चलः ।
मैत्र्यादिवासनायुक्तः परं वैराग्यमाश्रितः ॥
स्वदेहायतनस्यान्तर्विचिन्त्य परमेश्वरम् ।
हृत्पद्मकर्णिकामध्ये ध्यानयज्ञेन पूजयेत् ॥
मूले वा शाश्वते नाभौ कण्ठे वा तालुरन्ध्रके ।
भ्रूमध्ये द्वादशान्ते वा ललाटे मूर्ध्नि संस्मरेत् ॥

1. 'क्षिप्य चा' क. पाठः.

तत्र सावरणं वापि निरावरणमेव वा ।
द्विदले षोडशारे वा द्वादशारे यथाविधि ॥
दशारे वा षडश्रे वा चतुरश्रेऽथवा स्मरेत् ।
भ्रुवोरन्तरतः पद्मं द्विदलं तडिदुज्ज्वलम् ॥
मध्यस्थस्यारविन्दस्य क्रमाद्दै दक्षिणोत्तरे ।
विद्युत्समानवर्णस्य वर्णौ वर्णावसानके(?) ॥
षोडशारस्य पत्राणि स्वराः षोडशकानि वा ।
पूर्वादीनि क्रमादेतत् पद्मं कण्ठस्य मूलतः(?) ॥
[1]ककारादि[2]ठकारान्ता वर्णा वर्णान्यनुक्रमात् ।
भानुवर्णस्य पद्मस्य ध्येयं तद्धृदयान्तरे ॥
वर्णा वर्णानि पद्मस्य नाभेरुपरि तिष्ठतः ।
गोक्षीरधवलस्योक्ता डादिफान्ता यथाक्रमात् ॥
अधोमुखस्याम्बुजस्य शाश्वतस्य दलानि षट् ।
विधूमाङ्गारवर्णस्य वर्णा बान्तादयः क्रमात् ॥
मूलाधारारविन्दस्य दलानि च यथाक्रमम् ।
वकारादिसकारान्ता वर्णा वर्णमयाः स्थिताः ॥
एतेष्वाधारभेदेषु यत्रैवाभिरतं मनः ।
तत्रैव देवं देवीं च चिन्तयेद् धीरया धिया ॥
अङ्गुष्ठमात्रमचलं दीप्यमानं समन्ततः ।
शुद्धदीपशिखाकारं स्वशक्त्या परिमण्डितम् ॥
इषुरेखासमाकारं तारारूपमथापि वा ।
नीवारशूकसदृशं बिससूत्राभमेव वा ॥
कदम्बगोलकाकारं तुषारकणिकोपमम् ।

१. 'अ', २. 'न' ख. पाठः

क्षित्यादितत्त्वविजयं ध्यात्वा यद्यभिवाञ्छति ॥
तत्तत्तत्त्वाधिपामेव मूर्तिं स्थूलां विचिन्तयेत् ।
सदाशिवान्तं ब्रह्माद्याः शर्वाद्या अष्टमूर्तयः ॥
शिवस्य मूर्तयः स्थूलाः शिवशास्त्रविनिश्चिताः ।
घोरा मिश्राः प्रशान्ताश्च मूर्तयस्ता मुनीश्वरैः ॥
फलाभिलापवशतः चिन्त्याश्चिन्ताविशारदैः ।
घोराश्चेच्चिन्तिताः कुर्युः पापरो(गं ? ग)रिपुक्षयम् ॥
सर्वसिद्धिकरा मिश्राः प्रशान्ताः शान्तिदायकाः ।
सिध्यन्ति सिद्धयः शीघ्रं घोरे वपुषि चिन्तिते ॥
चिरेण मिश्रे सौम्ये तु न सद्यो न चिरादपि ।
सौम्ये मूर्तिविशेषेण शान्तिः प्रज्ञा प्रसाध्यते ॥
सिध्यन्ति सिद्धयश्चान्याः क्रमशो नात्र संशयः ।
श्रीकण्ठनाथं स्मरतां सद्यः सर्वास्तु सिद्धयः ॥
प्रसिध्यन्तीति मत्वैके तं वै ध्यायन्ति योगिनः ।
स्थित्यर्थं मनसः केचित् स्थूलध्यानं प्रकुर्वते ॥
स्थूले तु निश्चलं चेतो भवेत् सूक्ष्मे तु सुस्थिरम् ।
ईशे तु चिन्निते साक्षात सर्वाः सिध्यन्ति सिद्धयः ॥
मूर्त्यन्तरेषु ध्यातेषु परा सिद्धिर्न सिध्यति ।
रुच्यभ्यासादिना यद्यदीशरूपं विचिन्तितम् ॥
लक्षयेन्मनसः स्थैर्यं तत्तद् ध्यायेत् पुनः पुनः ।
ध्यानमादौ सविषयमन्ते निर्विषयं जगुः ॥
तत्र निर्विषयं ध्यानं नास्तीत्येव सतां मतम् ।
बुद्धेर्हि सन्ततिः क्वापि ध्यानमित्यभिधीयते ॥

१ 'न्तयेत् । ल' क ग पाठ.

न च निर्विषया बुद्धिः केवलेह प्रवर्तते ।
तस्मात् सविषयं ध्यानं स्थूलाकारसमाश्रयम्[1] ॥
निराकारात्मसंवित्तिर्या तु निर्विषयं मतम् ।
निर्बीजं च सबीजं च तदेव ध्यानमुच्यते ॥
निराकाराश्रयत्वे सा साकाराश्रयतस्तथा ।
तस्मात् सविषयं ध्यानमादौ कृत्वा सबीजकम् ॥
अन्ते निर्विषयं कुर्यान्निर्बीजं सर्वसिद्धये ।
प्राणायामेन सिध्यन्ति दिव्याः शान्त्यादयः क्रमात् ॥
शान्तिः प्रशान्तिर्दीप्तिश्च प्रसादश्च ततः परम् ।
शमः सर्वस्य पापस्य शान्तिरित्यभिधीयते ॥
तमसोऽन्तर्बहिर्नाशः प्रशान्तिः परिगीयते ।
बहिरन्तःप्रकाशो यः स दीप्तिरिति कथ्यते ॥
स्वच्छता या तु सा बुद्धेः प्रसादः परिकीर्त्यते ।
करणानि च सर्वाणि बाह्यान्याभ्यन्तराणि च ।
बुद्धेः प्रसादतः क्षिप्रं प्रसन्नानि भवन्त्युत ॥
ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनम् ।
एतच्चतुष्टयं ज्ञात्वा ध्याता ध्यानं समाचरेत् ॥
ज्ञानवैराग्यसम्पन्नो नित्यनिर्विण्णमानसः ।
श्रद्दधानः प्रसन्नात्मा ध्याता सद्भिरुदाहृतः ॥
ध्यै चिन्तायां स्मृतो धातुः शिवचिन्ता मुहुर्मुहुः ।
अव्याक्षिप्तेन मनसा ध्यानमित्यभिधीयते ॥
बुद्धिप्रवाहरूपस्य ध्यानस्यास्यावलम्बनम् ।

---

१. 'यम् । सूक्ष्माश्रय निर्विषय नापर परमार्थतः । यया सविषय ध्यान साकारात्मसमाश्रयम् ॥ निरा' ख ग पाठः.

ध्येयमित्युच्यते सद्भिस्तत् स्वयं परमेश्वरः ॥
विमुक्तिप्रत्ययः पूर्वमैश्वर्यं चाणिमादिकम्[1] ।
शिवध्यानस्य तस्यास्य साक्षादुक्तं प्रयोजनम् ॥
यस्मात् सौख्यं च मोक्षं च ध्यानादुभयमाप्नुयात् ।
तस्मात् सर्वं परित्यज्य ज्ञाननिष्ठो भवेन्मुनिः ॥
नास्ति ज्ञानं विना ध्यानं नास्ति ध्यानमयोगिनः ।
ज्ञानं ध्यानं च यस्यास्ति तीर्णस्तेन भवार्णवः ॥
ज्ञानं प्रसन्नमेकाग्रमशेषोपाधिवर्जितम् ।
योगाभ्यासेन युक्तस्य योगिनस्त्वेव सिध्यति ॥
प्रक्षीणाशेषपापानां ज्ञानध्याने भवेन्मतिः ।
पापोपहतबुद्धीना तद्वार्तापि सुदुर्लभा ॥
धनुषां कोटिभिर्योगः समन्तात् परिरक्षति ।
सहस्रैः षष्टिभिर्गङ्गा धर्मक्षेत्रं तदर्धतः ॥
अग्नौ क्रियावतामेव दिवि देवा मनीषिणः ।
प्रतिमास्वप्रबुद्धानां योगिनामात्मनि स्थिताः ॥
ईशमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
आत्मस्थं यः शिवं त्यक्त्वा बहिःस्थं यजते शिवम् ॥
करस्थं पिण्डमुत्सृज्य लिहेत्[2] कोर्परमात्मनः ।
तीर्थानि तोयपूर्णानि देवान् पाषाणमृन्मयान् ॥
योगिनो न प्रपद्यन्ते स्वात्मप्रत्ययकारिणः ।
आत्मस्थं तीर्थमुत्सृज्य बहिस्तीर्थानि यो व्रजेत् ॥
करस्थं स महारत्नं त्यक्त्वा काचं विमार्गति ।
योगिनां हि वपुः सूक्ष्मं भवेत् प्रत्यक्षमैश्वरम् ॥

१ 'मु' घ. पाठ॰. २. 'लेढि यो' ग पाठ

यथा स्थूलमयुक्तानां मृत्काष्ठाद्यैः प्रकल्पितम् ।
यथेहान्तश्चरा राज्ञां प्रियाः स्युर्न बहिश्चराः ॥
तथान्तर्ध्यानरहिताः प्रियाः शम्भोर्न कर्मिणः ।
बहिःकर्मकरा यद्वन्नातीव फलभागिनः ॥
दृष्टा नरेन्द्रभवने तद्वदत्रापि कर्मिणः ।
जिज्ञासुरपि योगस्य यां गतिं लभते मुनिः ॥
न तां गतिमवाप्नोति सर्वैरेव महामखैः ।
ज्ञानं योगश्च यस्यास्ति तीर्णस्तेन भवार्णवः ॥[1]
यथा वह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहति क्षणात् ॥
अत्यल्पोऽपि यथा दीपः सुमहन्नाशयेत् तमः ।
योगाभ्यासस्तथाल्पोऽपि महत् पापं विनाशयेत् ॥
ध्यायतः क्षणमात्रं वा श्रद्धया परमं पदम् ।
यद् भवेत् सुमहत् पुण्यं तस्यान्तो नैव विद्यते ॥
नास्ति ज्ञानसमं तीर्थं नास्ति ज्ञानसमं तपः ।
नास्ति ज्ञानसमो यज्ञस्तस्माज्ज्ञानं सदाभ्यसेत् ॥
यद्यन्तरा विपद्येत ज्ञानयोगार्थमुद्यतः ।
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ॥
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
ज्ञानयोगाच्च तं लब्ध्वा संसारमतिवर्तते ॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किञ्चित् कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥
द्विजानां वेदविदुषां कोटिं संभोज्य यत् फलम् ।

---

१ स पूत इति वेदगी । य' घ पाठ

भिक्षामात्रप्रदानेन योगिनां तत् फलं लभेत् ॥
यज्ञाग्निहोत्रदानेषु तीर्थवेदेषु यत् फलम् ।
ज्ञानिनामन्नदानेन तत् समग्रं फलं लभेत् ॥
ये पुनः सततं भक्ता भवन्ति ज्ञानयोगिनाम् ।
ते विन्दन्ति महाभोगानन्ते योगं च शाश्वतम् ॥
भोगयोगार्थिभिस्तस्मात् संपूज्या ज्ञानयोगिनः[1] ।
प्रतिश्रयान्नपानाद्यैर्ये[2] तु(?) प्रावरणादिभिः ॥
योगधर्मः सुसारत्वादभेद्यः पापमुद्गरैः ।
वज्रतण्डुलवत् तस्मात् तस्यान्तो नैव विद्यते ॥
वर्तमानोऽपि याप्येन[3] योगी तेन न लिप्यते ।
वर्तमानं सदा (ये?के)न पद्मपत्रं यथा तथा ॥
यद्वन्मन्त्रबलोपेतः क्रीडन् सर्पैर्न दश्यते ।
क्रीडन् न दश्यते ज्ञानी तद्वदिन्द्रियपन्नगैः ॥
यस्मिन् देशे वसेन्नित्यं ज्ञानयोगरतो मुनिः ।
सोऽपि देशो भवेत् पूतः स पूत इति किं पुनः ॥
तस्मात् सर्वं परित्यज्य कृत्यमन्यद् विचक्षणः ।
सर्वदुःखप्रहाणाय[4] ज्ञानयोगं समभ्यसेत्[5] ॥
सिद्धयोगफलो देही लोकानां हितकाम्यया ।
भोगान् भुक्त्वा यथाकामं विहर(न्वा?त्या)त्मवत्तया ॥
सर्व शरीरिणा साध्यं शरीरं खलु दुर्लभम् ।
तत् कालवञ्चनेनैव कृत्वा देहं[6] प्रतिष्ठितम्[7] ॥
ज्ञाने च योगे चाभ्यासान्नित्यं कुर्याद् विचक्षणः ।
सर्वेषां मृत्युकालस्तु स्वस्वश्वासप्रकल्पितैः ॥

---

१ 'द' ख पाठ  २ न्वै । या' ख ग पाठ.  ३ 'पापेन' ग पा'.
४ 'णाशाय', ५. 'द्या' घ. पाठ, ६ 'द्व', ७. 'त । ' ग. पाठ'.

वत्सरैः स्यादतस्तस्य विजयात् कालवञ्चनम् ॥
योगाभ्यासवशादेव वायोर्विजयमाप्नुयात् ।
आयुरादौ परीक्षेत ततो विज्ञानमभ्यसेत् ॥
आयुर्विरहिते मर्त्ये विज्ञानं निष्फलं यतः ।
तस्मात् सर्वप्रयत्नेन ज्ञात्वा कालं हि योगवित् ॥
कालोत्तरं ततः कुर्याद् ध्यानधारणया भृशम् ।
कालं कलयते यस्मात् तस्मात् कालः प्रकीर्तितः ॥
स तुट्यादिविभेदेन कालः सर्वत्र संस्थितः ।
तुटिर्लवो निमेषश्च काष्ठा चैव कला तथा ॥
मुहूर्तश्चाप्यहोरात्रमिति कालप्रभेदकाः ।
कालो वायुः समाख्यातः कालः सर्वज्ञ उच्यते ॥
कालो यमश्च सूर्यश्च सोमो रुद्रस्तथैव च ।
सर्वदेवमयः कालः कालोऽनन्तर्हितः सदा ॥
अधोगतं भवेद् वाममूर्ध्वगं दक्षिणं भवेत् ।
अन्तर्गतिर्भवेत् सोमस्तथा सूर्यो बहिर्गतिः ॥
प्रविष्टश्चोत्तरो ज्ञेयो निर्गतः काल उच्यते ।
सर्वदेवमयो वायुस्तस्माज्ज्ञात्वाभ्यसेन्मुनिः ।
इडा चन्द्रकला ज्ञेया पिङ्गला भास्करस्य तु ।
सुषुम्नाग्निकला ज्ञेया तिसृभिस्तु सदा वहेत् ॥
सुषुम्नावाहनं तत्र न (व?वि) जानन्ति मानवाः ।
तया विन्दन्ति सञ्चारं देवाः परमयोगिनः ॥
इडायां पिङ्गलायां च चरन्तौ चन्द्रभास्करौ ।
तावेव ध(त्तात् ? त्तः) सकलं कालं रात्रिन्दिवात्मकम् ॥

भोक्त्री सुषुम्ना कालस्य गुह्यमेतदुदाहृतम् ।
शरीरादधिकं श्वासो निर्गमे द्वादशाङ्गुलम् ॥
प्रवेशेऽष्टाङ्गुलो मध्ये विनष्टं चतुरङ्गुलम् ।
षट्युत्तैस्तु त्रिशतैः श्वासैरेका तु नाडिका ॥
पञ्चभिर्नाडिकाभिस्तु राशिरेकः प्रकीर्तितः ।
दिनं मेषादिमीनान्तैरेकं द्वादशराशिभिः ॥
अयुते द्वे सहस्राणि षट् शतानि तथैव च ।
श्वासाः प्रयान्ति निर्यान्ति जन्तूनां तु दिने दिने ॥
दिनानां पञ्चदश्यो तु पक्षः पूर्वापराह्वयः ।
ताभ्यामेको भवेन्मासो द्वौ मासौ स ऋतुर्भवेत् ॥
ऋतुभिश्च त्रिभिर्विद्यादयनद्वयमेव हि ।
तेनायनद्वयेनाब्दं तच्छतं त्वायुरुत्तमम् ॥

इह प्राणवायुं सदाभ्यासतो यो
नरो नूनं भावयत्येनमज्ञात् (?) ।
समत्वं शरीरेण वा भूतलेऽस्मिन्
स पूज्यो बुधैरुत्तमो योगवित्सु ॥

इडाचारं निरुन्ध्यात् तु विशेषेण जिजीविषुः ।
इडायां चरतः पुंसो मृत्युरेव न संशयः ॥
शतं वा नवतिर्वापि ततोऽपि न्यूनमेव वा ।
यावत्कालं तु यस्यायुस्तत्तच्छ्वासप्रमाणतः ॥
श्वासचारवशादेव मृत्युकालः प्रतीक्ष्यताम् ।
वत्सरस्यादिकाले तु सञ्जाते चोत्तरायणे ॥
वायुर्दक्षिणगे पञ्च नाडिका + + + + + ।
ततः सव्ये तथा पञ्च शतायुश्चेदयं भवेत् ॥

१. 'श्या', २. 'स्तुत' छ. पाठ. ३. 'कीर्त्यताम्' घ. पाठ.

प्रवक्ष्यतेऽधुना चान्यत् भुक्तिमुक्तिप्रदायकम् ।
योगिनां हितकृच्छश्वदप्रकाश्यं सुदुर्लभम् ॥
यदि प्रवर्तते सौम्यः सततं प्राणिनां तथा ।
पञ्चाहोरात्रचारेण त्रीण्यब्दानि स जीवति ॥
दशाहोरात्रचारेण तथाब्दद्वयमेव च ।
पञ्चोत्तरदशाहेन तथैकाब्दं न संशयः ॥
अह्नां तु विंशतिस्तस्यां वहते यदि चानिलः ।
षण्मासं जीवितं सत्यमिति देवेन भाषितम् ॥
पञ्चविंशदहोरात्रे त्रिमासं तस्य जीवितम् ।
षड्विंशद्दिवसेनैव द्विमासं तस्य जीवितम् ॥
सप्तविंशदहोरात्रमेकमासं न संशयः ।
अष्टविंशदहोरात्रं त्रिदिनं नात्र संशयः ॥
द्वात्रिंशद्दिवसेनैव दिनद्वयमिहोच्यते ।
त्रयस्त्रिंशदहोरात्रादेकाहं तस्य जीवितम् ॥
समासप्त(गते ? मगे) सूर्ये जन्मर्क्षे यदि चन्द्रमाः ।
पौष्णः कालः स विज्ञेयस्तदा श्वासं परीक्षयेत् ॥
मेषसिंहार्धघटिकाक्रमाल्[2]लक्षाश्रयो मरुत् ।
गतञ्च नो रतिर्नाम्ना तुङ्गश्चेति दर्[3]दत् समाः (?) ॥
अन्यो मान्यो नाग इति नाडिकास्वेकगो मरुत् ।
अष्टाविंशत् पञ्चविंशन् द्वादशाब्दानि चेच्छति ॥
एकद्वित्रिश्च कृत्वाह्नामेकनाड्याश्रयोऽनिलः ।
दशाष्टौ षट् च चत्वारि वत्सराणि स जीवति ॥

१. 'नामपि। प', २. 'त् पक्षा' घ. पाठ. ३. 'दे' क. ग. पाठः.

शन्नो नेयो मया नारी मार इत्येकगो[1]दिने ।
त्रिद्व्येकशरदां षड्भिर्मासानां चानिलो द[2]देत् ॥
मासद्वन्द्वं मासमेकं मासार्धं दशवासरम् ।
क्षुद्रैः सारैर्हरैर्धारैर्दिनैः पक्षानिचोदयेत् (?) ॥
नागः कालः खलो लोल इति पक्षोदितो दिनैः ।
अह्नां षट्त्रिकद्वन्द्वं चैकं चानुग्रहे मरुत् ॥
यस्य कस्य च मासस्य शुक्लपक्षस्य चादितः ।
परीक्षेत तथा मृत्युं वायुचारवशाद् बुधः ॥
वामे यदि वहेद् वायुरेकाहोरात्रमेव च ।
वर्षत्रयाद् भवेन्मृत्युर्द्विदिने वत्सरद्वयात् ॥
त्रिदिने वत्सरान्मृत्युर्दशाहे मासतो मृतिः ।
मासे त्वेकदिने मृत्युरेवं ज्ञेयं विपश्चिता ॥

प्रारभ्य दर्शे प्रथमामुदेति
वामे पुटे त्रीणि दिनानि देवः ।
वामेतरे त्रीणि ततो दिनानि
पूर्वा तिथिर्यावदथैवमेव ॥
अथारभ्य शुक्लान्यपक्षादिभू[3]तां
ति[4]थिं त्रीणि देवो दिनान्यभ्युदेति ।
पुटे दक्षिणे त्रीणि वामे तु यावत्
कुहूरेवमेवं सदा त्र्यक्षपन्ना(?) ॥
एकस्य पक्षस्य विपर्ययेण
रोगा[5]भिभूतिर्भवतीह पुंसाम् ।

१. 'शो' ग पाठ २ 'दे' क ख पाठ ३. 'ता', ४. 'थिस्त्रीणि' घ पाठ . ५. 'तस्य निदानभूतम् ।' घ पाठ

तयोर्द्वयोर्बन्धुसुहृद्विपत्तिः
पक्षद्वय[2]व्यत्ययतो मृतिः स्यात् ॥
अधुना वक्ष्यते कालो योगिनां भुक्तिमुक्तिदः ।
गुप्तः स सर्वशास्त्रेषु शिवेन कथितः पुरा ॥
सोमाधःस्थो यदा बिन्दुर्न दृष्टो योगवित्तमैः ।
षण्मासं जीवितं तस्य(?) नात्र कार्या विचारणा ॥
तस्योपरि त्रिमासं स्याद् द्विमासं तस्य वामतः ।
एकमासं भवेत् तस्य दक्षिणे च[3] न दृश्यते ॥
मध्ये मासार्धमुद्दिष्टं जीवितं हि न संशयः ।
सोमेऽमावास्यायां + + प्रविष्टे रविमण्डले[4]म् ॥
तस्मिन् कालं ततो ज्ञेयाद् योगी योगपरायणः ।
सूर्याधःस्थं दशाहं स्यात् पञ्चाहं तस्य चोपरि ॥
त्र्यहं वा वामतो ज्ञेयं द्व्यहं वा दक्षिणे तथा ।
अन्तरेकाहमुद्दिष्टं नात्र कार्या विचारणा ॥
अथान्यश्च प्रयोगोऽस्मिन्नधुना संप्रवक्ष्यते ।
नानाभेदविभेदेन भेदितो योगिभिः पुरा ॥
शुद्धस्फटिकसंकाशं द्वादशान्तेऽवलोकयेत् ।
द्वादशाङ्गुल[5]मायामं शरीरं कालरूपिणम् ॥
उन्मीलमीलकरणान्मुकुलीमुद्रया भृशम् ।
दृश्यते नात्र सन्देहो भ्रुवोर्मध्ये न चान्यथा ॥
अशिरः पश्यते तच्चेत् षण्मासं तस्य जीवितम् ।

---

१. 'जने विप' घ. पाठ. २ 'त्र' ख. ग. पाठ.. ३. 'न च द' ग. घ. पाठः ४. 'ले ॥', ५. 'न्मी' ख पाठ'.

नेत्रहीने यदा तस्मिन् नेत्ररोगो भविष्यति ॥
छिन्ने हस्ते यदा तस्मिन् हस्तरोगं विनिर्दिशेत् ।
धूम्रवर्णे यदा पश्येत् कलहः संप्रजायते ॥
अथवा कथ्यते चान्यत् प्रयोगो भुवि दुर्लभः ।
मनुजानां हितार्थाय शिवेन कथितः पुरा ॥
पृष्ठे तु द्युमणिं कृत्वा स्वयं पद्मासने स्थितः ।
मुद्रां तु मुकुलीं[1] बद्ध्वा ततश्छायां निरीक्षयेत् ॥
ततोऽनिमिषदृग् भूत्वा व्यग्रे नभसि कालवित् ।
आत्मच्छायां पुनर्वीक्ष्य ततः खमवलोकयेत् ॥
शुद्धस्फटिकसंकाशं निर्मलं पापनाशनम् ।
विग्रहं दृश्यते तस्मिन् नात्र कार्या विचारणा ॥
याद्दशेन प्रकारेण स्थितं तत्रैव मानवः ।
तादृशं पश्यतो व्योम्नि छायापुरुष उत्तमः (?) ॥
उत्तमाङ्गविहीना तु छाया यद्यथ दृश्यते ।
षण्मासाभ्यन्तरे तस्य प्राणहानिर्न संशयः ॥
अदृष्टे दक्षिणे हस्ते त्रिमासं तस्य जीवितम् ।
वामहस्ते विहीने तु मासमेकं प्रकीर्तितम् ॥
अर्धे मासार्धमुद्दिष्टं दशाहं दक्षिणे पदे ।
वामे पञ्चाहमुद्दिष्टं नात्र कार्या विचारणा ॥
रक्तवर्णेऽर्थलाभः स्याद् विनाशः कृष्णवर्णके ।
स्थूले व्ययं[2] कृशे लाभमित्थं ज्ञेयं विपश्चिता ॥

---

१ 'मि' ग घ पाठः २ 'यं' ग. पाठ,

अथान्यश्च प्रयोगोऽस्मिन् कथ्यते कालवेदिनाम् ।
हिताय साधकेन्द्राणां संक्षेपादुत्तमोत्तमम् ॥
मुद्रां तु मुकुलीं सम्यक् संस्थाप्य शिरसि क्रमात ।
नासाग्रं वीक्षमाणस्य दृश्यते मुकुलं महत ॥
रम्भापुष्पसमाकारं शिशुकिञ्जल्कसन्निभम् ।
दृश्यन्ते द्वादशदलान्यभ्यासात तस्य मन्त्रितार्त्[1] ॥
यदाप्येकं दलं नष्टं रुद्रमासं स जीवति ।
दलहानिक्रमाज्ज्ञेया मासाः शेषाश्च योगिभिः ॥
न दृश्यते चेन्मुकुलं सद्यो मरणमादिशेत् ।
स्वहस्ते मस्तके न्यस्ते तद्दण्डमवलोकयेत् ॥
विच्छिन्नं पश्यतो मृत्युः षण्मासात प्राङ् न संशयः ।
अरुन्धतीं ध्रुवं व्योम सरितो यो न पश्यति ॥
यः पश्येच्छर्दिविण्मूत्रान् रागरोप्यहिरण्यवत् (?) ।
गन्धर्वादिपुरं हैमौ वृक्षाद्री वा य ईक्षते ॥
यत्पदं पांसुपङ्कादावर्पितं खण्डितं भवेत ।
अमेघे व्योम्नि यः पश्येद् विद्युतं दक्षिणागताम् ॥
सलिले शक्रचापं वा तस्यार्वाग् वत्सरान्मृतिः ।
काकारुणकपोतादि यमारोहति निर्भयम् ॥
कृष्णा स्त्री यच्छिरश्छिन्द्यात् स्वप्ने तस्याचिरान्मृतिः ।
ऊर्ध्वाधःपार्श्वसम्मर्दे नेत्रयोस्तु न दृश्यते ॥
ज्योतिश्चेत् पट्त्रिकद्व्येकमासिकं तस्य जीवितम् ।

---

1. 'न्' ग पाठ.

कर्णोष्ठौ चलतः स्थानाद् यस्य वक्रा च नासिका ॥
कृष्णा जिह्वा च लोमेहे[1] पट्सप्ताहं स जीवति ।
नाभिमात्रे जले स्थित्वा स्वलिङ्गमवलोकयेत् ॥
यस्य लिङ्गं जलस्यान्तः प्लवेदूर्ध्वमलाबुवत् ।
तस्याशु मरणं विद्यादासन्नमिति पण्डितः ॥
दर्पणे वात्मनश्छायामप्सु वा यो न पश्यति ।
तथा प्रशान्ते दीपे तु गन्धाभावस्तु चेत् पुनः ॥
हानेरिन्द्रियशक्तीनां छायायाः परिवर्तनात् ।
हृद्धोपश्रवणदेश्च विज्ञानभ्रंशतो मृतिः ॥
अङ्गुष्ठाङ्गुलदोर्मध्यमणिबन्धध्वजादिषु ।
वायोरस्फुरणान्मृत्युः पांसुवर्षाच्च पृष्ठतः ॥
अदर्शनेन सूर्येन्द्वोः पुरुषस्याचिरान्मृतिः ।
दिवा सरश्मिः शीतांशुर्विरश्मिश्च दिवाकरः ॥
द्विधाभूतोऽथवा दीपो ज्वालयाधस्त्ययान्वितः ।
चन्द्रादित्यावसृक्सिक्तौ तद्रूपं वा वियत्तलम् ॥
यस्यैवाप्रतिभासैः[2] स्यात् तस्य मृत्युः पुरः स्थितः ।
षट्त्रिकद्व्येकमासार्धदशपञ्चाहजीवनम् ॥
दृष्टं पूर्वादिदिक्ष्वन्तश्छिद्रितं धूमसंकुलम् ।
भाति बिम्बक्रमाद् भानोरायुर्ज्ञात्वैवमात्मनः ॥
यत्नं कुर्यात् ततो योगी तज्जयायेतराय वा ।
कालचक्रमिदं ख्यातमथ तज्जय उच्यते ॥
दूरात् कालो यदि ज्ञातस्ततो विज्ञानमभ्यसेत् ।

१ 'क' ख. घ. पाठ. २. 'व' ग पाठ.

आसने चरतः काले त्यक्त्वा सर्वं परिग्रहम् ।
आश्रयेत् परमं दिव्यं स्थानं पापविमोचनम् ॥
देवैरुपासितः पूर्वमृषिभिश्च तपोधनैः ।
अथोच्यते हितार्थाय योगिनां कालवञ्चनम् ॥
वायुस्थाने मनः कृत्वा स्वाधारस्थेन वह्निना ।
प्रणवाभ्युत्थितेनैव स योगः कालवञ्चनम् ॥
यः[1] सप्तमेन वर्णेन हृत्पद्मे संपुटीकृते ।
सुषुम्नाग्रेऽमृतं ध्यायेन्मृत्युं जयति योगवित्॥
निर्वाणयोगयुक्तात्मा[2] हंसं नित्यं जपेद् बुधः ।
निर्वाणमूर्ध्वदेहं तु चतुरङ्गुलमीरितम् ॥
ऊर्ध्वं[3] प्राणो हकारः स्यादधोऽपानस्तु सः स्मृतः ।
प्राणापानसमायोगो हंसस्य जपतो भवेत् ॥
मुक्ताक्षरममुक्तेन[4] बद्ध्वा[5] तत्कालवञ्चनम् ।
चर्मादिना निबध्नीयादण्डं लिङ्गविवर्जितम् ॥
बध्यते यदि लिङ्गेन सार्धं पण्डो भविष्यति ।
प्रजाकामैरवश्यं तु सलिङ्गं नैव बध्यताम् ॥
बद्धं शनैः शनैरङ्गं पृष्ठपार्श्वे निवेश्य च ।
पद्मं वा स्वस्तिकं वापि बद्ध्वान्यतरमासनम् ॥
मनसा वायुबीजं च वह्नेरुपरि संस्मरेत् ।
वह्निमण्डलमध्यस्थं मनः कुर्यादतन्द्रितः ॥
वायुस्थितिस्तु-तत्रैव वह्निना सह निश्चलः ।

---

१. 'चस' ख. ग. पाठः. २. 'यत्तात्मा' ग. पाठ. ३. 'ध्वें' ग. घ. पाठ.
४. 'स' घ. पाठः. ५. 'र' ख. पाठः.

आयुर्विघातकृत् प्राणो दह्यते तेन वह्निना ॥
एवमभ्यसतो नित्यमायुर्भूयो विवर्धते ।
एकमाससमभ्यासाज्जीवेद् वर्षशतं नरः ॥
मासद्वयसमभ्यासाज्जीवेद् वर्षशतत्रयम् ।
संवत्सरसमभ्यासात् सहस्रायुर्भविष्यति ॥
वक्ष्यते पुनरन्यत् तु कालवञ्चनमुत्तमम् ।
योगिनां क्रीडनार्थाय लोकमध्ये निराकुलम् ॥
रसनां चोर्ध्वगां कृत्वा कामधेनुस्तनं सदा ।
कर्षयेन्निर्विकल्पेन कर्षमध्यस्थरूपकम् ॥
यदामृष्टं[3] तदानीं तु मुञ्चते परमामृतम् ।
तत्सेवया महासत्त्वो वलीपलितवर्जितः ॥
अजरो ह्यमरः शुद्धो मासेनैव भविष्यति ।
दैयुतं[4] संस्मृतं दिव्यं बिन्दुमध्यैतुरीयकम् ॥
कामधेनुस्तनं ह्येतदिति सिद्धैः प्रभाषितम् ।
अथान्यत् कथ्यते दिव्यं कालस्यास्य तु वञ्चनम् ॥
जिह्वां तथोर्ध्वगां कृत्वा लम्बिकायां निवेशयेत् ।
अभ्यसेद् यः प्रयत्नेन गजजिह्वां समाहितः ॥
घृताद्यास्वादविज्ञानं यावत् तावत् तदभ्यसेत् ।
कालवञ्चनमेतत् तु सर्वमुख्यं प्रचक्षते ॥
सर्वासामेव मुद्राणां मुद्रेय पारमेश्वरी ।
कथञ्चिद् बध्यमानापि त्रायते महतो भयात् ॥
जिह्वायां वायुमारोप्य जिह्वामूले निरोधयेत् ।

---

१ 'क्षसम' ख ग पाठ　२ 'सू' ख घ पाठ　३ 'द', ४ 'य', ग पाठ.

श्रमदाहौ न तस्य स्तो व्याधिभिश्च विमुच्यते॥
आत्मन्यात्मानमिडया समानीय भ्रुवोस्तदा ।
पिबेद् यस्त्रिदशाहारं जराव्याधिविनाशनम् ॥
काकचञ्चुपुटाकारं ध्यानधारणवर्जितम् ।
मारुतं यः पिबेन्नित्यं सर्वव्याधिविपापहम् ॥
सिद्धिः सारस्वती तेन सिध्यत्येव न संशयः ।
अनेलमूकोऽपि भवेत् सर्वज्ञः किं पुनः सुधीः ॥
गुल्मशूलादिशमनमभ्यासात् कालवञ्चनम् ।
सव्यापसव्यतो नित्यं कर्णादिपरिवर्तनम् ॥
सर्वव्याधिहरं तच्च कालवञ्चनमेव च ।[1]
शतं कण्ठस्य बाह्वोश्च द्विशतं चोदरे शतम् ॥
पार्श्वयोर्द्विशतं + + + + + + + + पुनः ।
अपानस्य शतं प्रोक्तं द्विशतं पादयोस्तथा ॥
यावत् तु शक्यं तावद्वा नित्यमेवं समभ्यसेत् ।
सर्वरोगविनाशः स्याज्जीवेद् वर्षशतं सुधीः ॥
गुह्याद्गुह्यतरश्चान्यः प्रकारः प्रोच्यतेऽधुना ।
गुह्याधारपरिस्पन्दः[2] सव्यासव्येन नित्यशः ॥
उत्कुटिकासने स्थित्वा पाणिनैकेन सध्वजः ।"

मण्डं संगृह्यान्यपाणिमध्यमाङ्गुल्याधारे समाहितः पूर्वाह्णमध्याह्नसायाह्नाख्यकालत्रितये परिवर्तनं कुर्यात् । पष्ट्युत्तरं शतं

---

१ 'घ', २ 'निरसव्यभतेहध्वत मासम् । उ काटि' ख पाठ 'निर्वृत्त. सव्यभते-इरतमासरुद्धटि' ग. पाठ,

वामे । दक्षिणे च तावदेव । ऊर्ध्वं च तावदेव । प्राह्णे पित्तहरं, मध्याह्ने वातनाशनं, सायाह्ने श्लेष्महरं जरारोगविनाशनम् । एवं त्रिसन्ध्यं हस्तद्वयेनातन्द्रितः कुर्यात् । अनेनार्शःशूलगुल्मादीनि च[1] नश्यन्ति । उक्तं च —

"शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ।
नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचकम् ॥"

इति अभ्यासात् कालवञ्चनमपि भवति । अन्यदपि वक्ष्यते —

बाह्यात् प्राणं समारोप्य पूरयित्वोदरस्थितम् ।
अङ्गुष्ठेना[2]सिकाग्रेण मनसा धारयेत् सदा ॥
शरीरं लघुतां याति पादाङ्गुष्ठे तु धारणात् ।
सर्वरोगविनाशः स्यान्नाभिमध्ये तु धारणात् ॥
नासाग्रधारणादेव वायोर्विजयमाप्नुयात् ।

सर्वदा पूरकाभ्यासात् प्राणजयो भवति, रेचकाभ्यासादपानजयः, कुम्भकाभ्यासात् सर्ववायुजयः । उक्तं च —

"रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् " ।

अन्यदपि[3] —

"इति रेचकपूरकौ विधाय
स्थिरधीः केवलमेव कुम्भकं यः ।
सततं कुरुते मनोजवत्वं
लभते वीतजरामयः स मर्त्यः ॥"

१, 'वि' ग. पाठ २ 'ष्ठ नासाग्रे म' घ., ३ 'द' 'ष्ठनासाग्रे म ' ग पाठ,

अन्यच्च —

"शक्यमासनमास्थाय समाहितमनास्तथा ।
करणानि वशीकृत्य विषयेभ्यो बलात् सुधीः ॥
अपानमूर्ध्वमाकृष्य प्रणवेन समाहितः ।
हस्ताभ्यां बन्धयेत् सम्यक् कर्णादिकरणानि च ॥
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां च चक्षुषी ।
नासापुटावथान्याभ्यां यावच्छक्ति निरोधयेत् ॥
अनेनोत्पद्यते नादः शुद्धस्फटिकसन्निभः ।
ब्रह्मरन्ध्रे सुषुम्नायां मृणालान्तरसूत्रवत् ॥
आ मूर्ध्नो वर्तते नादो वीणादण्डवदुत्थितः ।
शङ्खध्वनिनिभस्त्वादौ मध्ये मेघध्वनिर्यथा ॥
व्योमरन्ध्रगते नादे गिरिप्रस्रवणं यथा ।
व्योमरन्ध्रगते वायौ मनसा च सहेन्द्रियैः ॥
तदानन्दी भवेद् देही वायुस्तेन जितो भवेत् ।
वायुना पूरिते व्योम्नि साङ्गोपाङ्गकलेबरे ॥
तदात्मा राजते तत्र यथा व्योम्नि दिवाकरः ।
नादं चापि भ्रुवोर्मध्ये पश्येद् यावन्मनोलयम् ॥
जिह्वामूलेऽमृतस्राव(मे ? ए)वमभ्यस्यतो भवेत् ।
कम्पनं च तथा मूर्ध्नो मनसैवार्थदर्शनम् ॥
देवोद्यानानि रम्याणि नक्षत्राणि च चन्द्रमाः ।
ऋषयः सिद्धगन्धर्वाः प्रकाशं यान्ति योगिनाम् ॥

---

१ 'स' ख ग पाठ

एवम्प्रकारतो नित्यं प्राणायामं च कुर्वतः ।
प्राणो लयति तेनैव देहस्थान्तरततोऽधिकः ॥
देहश्चोत्तिष्ठते तेन कृतासनपरिग्रहः ।
निःश्वासोच्छ्वासकौ तस्य न विद्येते कथञ्चन ॥
देहे यद्यपि तौ स्यातां स्वाभाविकगुणावुभौ ।
तथापि नश्यतस्तेन प्राणायामोत्तमेन तु ॥
तयोर्नाशे समर्थः स्यात् क(र्तुः?र्तु) केवलकुम्भकम् ।
एवं येन जितो वायुर्नास्ति तस्य हि दुर्लभः ॥
आकुञ्चनविधानं तु सततं कालदुर्लभम् ।
भूतानां विजयः प्रोक्तो भूतस्थानेषु धारणात् ॥
भवन्ति भूतविजयाद् योगिनो येन सिद्धयः ।
पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ॥
आ जान्वोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ।
आ पायोर्हृदयान्तं यद् वह्नेः स्थानं तदुच्यते ॥
आ हृन्मध्याद् भ्रुवोर्मध्यं यावद् वायुकुल स्मृतम् ।
आ भ्रूमध्यात् तु मूर्धान्तमाकाशमिति चोच्यते ॥
पृथिव्यां वायुमास्थाय लकारेण समन्वितम् ।
ध्यायंश्चतुर्भुजाकारं ब्रह्माणं सृष्टिकारणम् ॥
धारयेत् पञ्च घटि(कां ? काः) पृथिवीजयमाप्नुयात् ।
वारुणे वायुमारोप्य वकारेण समन्वितम् ॥
स्मरन् नारायणं देवं चतुर्बाहुं किरीटिनम् ।

---

१ 'त्व' ग पाठ

धारयेत् पञ्च घटिका अपां विजयमाप्नुयात् ॥
वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् ।
त्र्यक्षकं वरदं रुद्रं भस्माञ्चिततनुं स्मरन् ॥
धारयेत् पञ्च घटिका वह्निनासौ न दह्यते ।
मारुते वायुमारोप्य महत्तत्त्वमनुस्मरन् ॥
यकारं पञ्च घटिका धारयेद् व्योमगो भवेत् ।
आकाशे वायुमारोप्य हकारेण समन्वितम् ॥
बिन्दुरूपं परं तत्त्वं दिव्याकारमनुस्मरन् ।
धारयेत् पञ्च घटिका जीवन्मुक्तो भविष्यति ॥
वातात्मकानां सर्वेषां योगेषु रमतां नृणाम् ।
प्राणसंयमनेनैव शोषं याति कलेबरम् ॥
पित्तात्मकानां त्वचिरान्न शुष्यति कलेबरम् ।
कफात्मकानां कायस्तु संपूर्णमचिराद् भवेत् (?) ॥
धारणां कुर्वतस्त्वग्नौ सर्वे नश्यन्ति वातजाः ।
पार्थिवे च जलांशे च धारणां कुर्वतः सदा ॥
नश्यन्ति श्लेष्मजा रोगा वातजाश्चाचिरात् तथा ।
व्योमांशे मारुतांशे च धारणां कुर्वतः सदा ॥
त्रिदोषजनिता रोगा विनश्यन्ति न संशयः ।
अपानमूर्ध्वमाकृष्य वायुमायुर्विघातकम् ॥
वह्निस्थाने निरुध्यैव चिरं तत्रैव धारयेत् ।
शरीरान्तःस्थिता ये तु प्राणपूर्वाश्च वायवः ॥
सर्वान् संहृत्य मनसा मध्यदेहे तु चिन्तयेत् ।
कालवञ्चनमेवं हि सूक्ष्मोपायं सुवर्णितम् ॥

शङ्खकुन्देन्दुवर्णाभं प्रासादं हृच्छिरः स्मृतम् ।
षण्मासाभ्यासयोगेन मृत्युं जयति योगवित् ॥
प्रासादेन तु मेधावी हृत्पिण्डे संपुटीकृते ।
सुषुम्नाग्रे सदा ध्यायेदमृतं चन्द्रमण्डलात् ॥
मूर्ध्नि ऊर्ध्वाभिदेशेषु ह्लावयेदात्मविग्रहम् ।
मृत्युं जयति योगं स सहस्रायुर्न संशयः ॥
यस्तुरीयेन वर्णेन चन्द्रमण्डलमध्यगम् ।
सम्पुटीकृत्य प्रासादमब्दमेकं समभ्यसेत् ॥
मृत्युञ्जयमिमं योगमयुतायुर्भविष्यति ।
हंसेन केवलं नित्यं चन्द्रमण्डलमध्यगम् ॥
हृदयं चिन्तयेदेवं मृत्युं जयति वत्सरात् ।
ओंकाराम्भोज आसीनं हंकारं शशिमण्डलम् ॥
संकोरममृतं ध्यायेन्मृत्युं जयति योगवित् ।
अपानं मुकुलीकृत्य वायुमाकृष्य चोन्मुखम् ॥
प्रणवेन समुत्थाप्य श्रीबीजेन + + + + ।
स्वात्मानं च श्रियं ध्यायेदमृतप्लावनं तथा ॥
कालवञ्चनमेतद्धि सर्वमुख्यं प्रचक्षते ।
मनसा चिन्तितं सर्वमनायासेन सिध्यति ॥
हंसेन पङ्कजारूढं तन्मध्ये शिवरूपिणम् ।
अमृतेन तयोर्वेष्ट्य मृत्युनाशनमेव हि ॥
पिण्डस्थं पिण्डमध्यस्थः पिण्डोदरपुटीकृतः ।
पिण्डेन पिण्डितः पिण्डः पिण्डं पिण्डे विनिक्षिपेत् ॥

---

१ २ 'प्र' ख घ पाठ ३ 'ग' घ पाठ ४ 'मि' ग घ पाठ ५ 'क्षेन
विक्षि' घ पाठ

मृत्युञ्जयमिमं योगमभ्यसेत् सततं नरः ।
अमरत्वमवाप्नोति नात्र कार्या विचारणा ॥
यत्प्रदेशे मनः कुर्याद् वायुस्तत्र गतो भवेत् ।
स तु वायुवशेनैव दह्यते तद्गतेन वै ॥
यावन्मनोलयं तावत् कुर्यात् स्थानेषु धारणाम् ।
समाधिमधु[1]ना वक्ष्ये प[2]रमं योगमुत्तमम् ॥
यस्यानुभूतिमात्रेण महायोगमवाप्स्यति ।
योगानां सारभूतत्वात् पूर्वोक्तमपि कथ्यते ॥
प्रलीनसकलीभा(व?वा) जीवात्मपरमात्मनोः ।
तादात्म्यभावना सद्भिः समाधिरिति कीर्तितः ॥
अकारप्रतिपाद्यस्य ब्रह्मणः परमात्मनः ।
मकारप्रतिपाद्यस्य स्वस्य जीवात्मनस्तथा ॥
उकारेण हि तादात्म्यमवधारणवाचिना ।
बुद्ध्वैवं प्रणवार्थं तु ब्रह्मैवा[3]हमिति स्मरेत् ॥
नाभेरधः स्थितं जीवं परमव्योमवर्तिना ।
ब्रह्मणा सह युञ्जीत प्रणवाकर्षणेन च ॥
मूलाधारादिमूर्धान्तं स्थाणुवद् ब्रह्मरन्ध्रगम् ।
कदम्बगोलकाकारं विद्युत्पुञ्जसमप्रभम् ॥
सर्वव्यापि स्थितं सूक्ष्मं योगगम्यमनामयम् ।
आनन्दमचलं शुभ्रं मनसोऽतीतगोचरम् ॥
वाच्यवाचकरहितं हेयोपादेयवर्जितम् ।
अद्वयं निष्कलं सूक्ष्मं शून्यं शून्यविवर्जितम् ॥

१. 'सु' ख पाठ २ 'च', ३ 'वोमिति सरम' ग. पाठ

स्वात्मानं मनसा ध्यात्वा नान्यत् किञ्चन चिन्तयेत् ।
एवं समाधिं कुर्वाणो मनोलयमवाप्नुयात् ॥"

अस्मिन्नर्थे माण्डूक्योपनिषत्—

*"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥"

सुबोलोपनिषत्—

"ओङ्काररथमारुह्य विष्णुं कृत्वा तु सारथिम् ।
ब्रह्मलोकपदान्वेषी रुद्राराधानतत्परः ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
योगाग्निमथनाभ्यासाज्ज्योतिः पश्येन्निगूढवत् ॥
सौषिर्यं नास्ति देहेऽस्मिन् मांसास्थिरुधिरं न च ।
इन्द्रायुधमिवाकारं(?) कायं वस्त्वेव संस्मरेत् ॥
पृथिव्यादीनि भूतानि भौतिकानि तथैव च ।
शब्दादिविषयांश्चैव श्रोत्रादीनीन्द्रियाण्यपि ॥
स्वकारणेषु संहृत्य मनसा सुस्थिरेण च ।
परमव्योमपर्यन्तं केवलं निर्गुणं स्मरेत् ॥
कार्यकारणभावेन स्थूलसूक्ष्मविकल्पितम् ।
स्कन्धशाखाफलादीनि बीजे वृक्षस्य वै यथा ॥
एकदेशविहीनं तु स्वदेहं मनसा स्मरेत् ।
क्रमात् सर्वाङ्गहीनं तु स्वात्मानं व्योम्नि संस्मरेत् ॥
जाग्रावस्थास्थितैश्चापि तुर्यावस्थामवाप्नुयात् ।

१ 'च', २. 'ति' घ पा'

* वाक्यमिद माण्डूक्ये नास्ति, मुण्डकोपनिषदि तु दृश्यते ।

मनसि प्रलयं याते ब्रह्मनिर्वाणमृच्छति ॥
गगने कुरु चात्मानमात्ममध्ये तु खं कुरु ।
अशरीरं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥
ऊर्ध्वाधः शून्यभावं तु खं शून्यं बिन्दुशून्यकम् ।
नादशून्यं शक्तिशून्यं सर्वशून्यं निरास्पदम् ॥
निरालम्बं निराधारं निराभासं निरामयम् ।
आदिमध्यान्तरहितं चिन्तयेत् परमाद्भुतम् ॥
एवं समाधिं कुरुते यस्त्रिसन्ध्यं समाहितः ।
अनायासेन तस्योक्ता मुक्तिरेकेन जन्मना ॥"

अवस्थाशून्यः परमात्मेति ज्ञापनार्थं जाग्रदादयोऽवस्थाः कथ्यन्ते —

"बाह्यैराभ्यन्तरैर्युक्ता चतुर्दशभिरिन्द्रियैः ।
तेषां विषयसंयुक्ता जाग्रावस्था प्रकीर्तिता ॥
जाग्रज्जनितसंस्कारजनितैरान्तरेन्द्रियैः ।
यदा तु विषयान् भुङ्क्ते स्वप्नावस्था प्रकीर्तिता ॥
धूममध्ये यथा वह्निर्यथा तैलं तिले तथा ।
अविद्योपाधिसञ्छन्ना बोधरूपा सुषुप्तिका ॥
अवस्थोद्भवसंहारहीनो मायानपाश्रितः ।
तुर्यावस्थो भवेदात्मा केवलानन्दविग्रहः ॥
तुर्यातीतं च यत् प्रोक्तमवाङ्मनसगोचरम् ।
जाग्रत्स्वप्नसुषुप्तिहीनं स्थितमप्रतियोगिकम् ॥"

---

१ 'त्वा' ख. पाठ

इति ।

शरीरं विसिसृक्षुश्चेन् सुखमासनमास्थितः ।
इदं ब्रह्मपुरं देहं पूरयेद् बाह्यवायुना ॥
सर्वद्वाराणि संयम्य मनो बाह्यान्निरुध्य च ।
पादाङ्गुष्ठादिकेष्वेव स्वेषु स्थानेष्ववस्थितान् ॥
निश्शेषान् संहरेद् वायून् सर्वानव्यग्रया धिया ।
मनसा वायुबीजेन संपुट्य प्रणवं जपन् ॥
पादाङ्गुष्ठादिमर्मभ्यो मर्मान्तरमुपागते ।
वायुबृन्दे तु तत्रस्थो वह्निस्तमनुगच्छति ॥
प्राणादिवायुबृन्दे च नाभिमूलमुपागते ।
ऊर्ध्वदेहस्थितान् वायूनधस्तत्र समाहरेत् ॥
मूलाधारगतं वह्निं निश्शेषं तत्र कर्षयेत् ।
ततः प्रकृतिरूपा सा दग्धा भवति कुण्डली ॥
ततः सुषुम्नारन्ध्रेण वायुं वह्निपुरःसरम् ।
हृन्मध्ये च समारोप्य कण्ठकूपे ततः परम् ॥
भ्रुवोर्मध्ये समारोप्य शनैस्तत्र निरुध्य च ।
अकारप्रतिपाद्यस्य ब्रह्मणः परमात्मनः ॥
मकारप्रतिपाद्यस्य स्वस्य जीवात्मनस्तथा ।
उकारेणैव तादात्म्यमवधारणवाचिना ॥
ब्रह्मैवाहमहं ब्रह्म प्रणवार्थमिति स्मरन् ।
एकाक्षरपरं ब्रह्म प्रणवं वाप्यनुस्मरन् ॥
संभिद्य मनसा मूर्ध्नि ब्रह्मरन्ध्रस्थवायुना ।
प्राणमुन्मोचयेत् पश्चान्महाप्राणे खमध्यमे ॥

देहातिगे जगत्प्राणे शून्ये नित्ये ध्रुवे पदे ।
आकाशे परमानन्दे स्वात्मानं योजयेद् धिया ॥
मूर्धरन्ध्राद् विनिष्क्रान्तं विद्युत्पुञ्जसमं महत् ।
निरञ्जनं परं ज्योतिरेकमेव भविष्यति ॥
वैश्वानरः स्वयं वह्निर्ब्रह्मरन्ध्रविनिर्गतः ।
यथैव मथितो वह्निररणिं सन्दहेत् तथा ॥
सन्तापयति स्वं देहमापादतलमस्तकम् ।
ब्रह्मैवासौ भवेदात्मा न पुनर्जन्मभाग् भवेत् ॥
नानाविज्ञानजननं विद्वज्जनमनोहरम् ।
प्रपञ्चहृदयाख्यं हि प्रपञ्चोत्तमभूषणम् ॥
सम्यग्ज्ञानप्रदं शश्वदज्ञानां सर्ववस्तुषु ।
अप्रकाश्यमिदं तन्त्रं संसारवनदाहकम् ॥

इति प्रपञ्चहृदये योगप्रकरणं नामाष्टमं समाप्तम् ।

प्रपञ्चहृदय समाप्तम् ।

---

शुभं भूयात् ।

